# शब्द-शक्ति-प्रकाशिकायां

## समासान्तः

## प्रथमभागः

न्यायाचार्य्य-श्रीजगदीश-तर्कालङ्कार-विरचितः

महामहोपाध्याय-श्रीगुरुचरण-तर्कदर्शनतीर्थ-विरचित-
विषमस्थल-टिप्पनी-समन्वितः कलिकाता-
विश्वविद्यालयानुमतितस्तेनैव
संशोधितः

विश्वविद्यालयतः प्रकाशितः




कलिकाता-विश्वविद्यालय-यन्त्रे मुद्रितश्च ।

ख्रः १९१४

# विज्ञापनं ।

नवद्वीप-निवासिना श्रीमता जगदीश-तर्कालङ्कारेण विरचितोऽयं शब्दशक्ति-प्रकाशिका-नामको ग्रन्थो बहुषु स्थानेषु मुद्रायन्त्र-साहाय्येन प्रकाशितोऽपि न सम्यक् परिशुद्ध इत्यवलोक्य कलिकाता-विश्व-विद्यालयस्य भूतपूर्व्व-सहकारि-सभापतिना स्वनाम-विख्यातेन मान-नीय-स्यार-डाक्तार-श्रीयुक्त-आशुतोष-मुखोपाध्याय-सरस्वती-शास्त्र-वाचस्पति-महोदयेनानुरुद्धोऽहं विश्वविद्यालयानुकूल्यतो ग्रन्थमिमं मुद्रापयितुं प्रवृत्तः। अस्य च ग्रन्थस्य समासान्तभागः संस्कृत-भाषासु एम्, ए, परीक्षार्थिनां पाठ्यरूपेण विश्वविद्यालय-नेतृभि-र्निर्द्धारितोऽतः प्रथमन्तमेव भागं प्रकाशयितु-मुद्युक्तोऽहं। अस्मिं-श्चांशे विषमस्थलेषु यथामति सन्निवेशिता टिप्पनी विद्यार्थिनामुप-काराय प्रभवति चेत् परिश्रम-साफल्यमनुभविष्यामि। भ्रमात् प्रमादाद्वा यदि कश्चिद्दोषोऽत्र संलक्ष्यते विद्वद्भिस्तदा सोऽनुकम्पया तैः क्षन्तव्य इति साञ्जलिरयं प्रार्थयते।

विनीत

श्रीगुरुचरण-देवशर्म्मा।

# भूमिका ।

प्रथमं शब्द-प्रामाण्य-संस्थापनं, तत्र च वैशेषिक-जरन्मीमांसकादि-मतदूषणं । ततः सार्थक-लक्षणं, सार्थक-विभागः, प्रकृति-प्रत्यय-निपात-लक्षणं, वाक्य-लक्षण-तद्विभागौ, प्रकृति-विभागः, नाम-लक्षणं, नाम-विभागः, शब्द-सङ्केत-विचारः, रूढ़-लक्षक-योगरूढ़-यौगिक-नाम-लक्षणं, यौगिक-नामान्तर्गत-समासविचारः. समास-विभागः, कर्म्मधारय--द्विगु--तत्पुरुषाव्ययीभाव--बहुव्रीहि--द्वन्द्वोपपद-समास-भेदात् समासस्य सप्तविधत्वं, तेषां पृथक् लक्षणमुपपद-समासस्य षड्‌विधत्व-खण्डनञ्चैते समासान्तेऽस्मिन् ग्रन्थे प्रतिपादिताः । ततस्तद्धितान्तभागे तु तद्धितान्त-कृदन्त-नाम-निरूपणं, स्त्रीलिङ्गादिभेदेन नाम्नस्त्रैविध्यं, धातुलक्षणं, मूल-सौत्र-प्रत्ययान्त-भेदेनैव परस्मैपदित्वादि-भेदेनापि धातोस्त्रैविध्यं, विभक्ति-धात्वंश-तद्धित-कृद्भेदेन प्रत्ययस्य चातुर्व्विध्यम्, विभक्ति-लक्षणं, सुप्तिङ्-भेदेन तद्द्वैविध्यं, सुब्-लक्षणं, सुब्-विभागः, प्रथमादि-लक्षणं, कारक-लक्षणं, तद्विभागस्तत्प्रत्येक-लक्षणं, उक्तानुक्त-कारक-विचारः, द्विकर्म्मक-विचारः, कारकार्थ-तदन्यार्थ-सुब्-निरूपणं, तिङ् लक्षणं, तिङ्-विभागः, लडादि-लक्षणं, तदर्थ-निरूपणं, तद्धित-लक्षणं, तद्विभागः, तदर्थ-निरूपणञ्चेति ।

शब्दो द्विविधो ध्वनिर्वर्णश्च । ध्वनिर्मृदङ्गादि-प्रभवः । वर्णास्तु अकारादिरूपः कण्ठताल्वाद्यभिघात-प्रभवः । अत्र वर्णलक्षणस्योत्पत्तौ अयं क्रमः । तथा हि प्रथमतः पूर्व्वानुभूतवर्णस्मरणं, ततः तत्संस्कृतात्ममनः-संयोगात् सदृश वर्णोच्चारणेच्छा, ततः वर्णोच्चारण-प्रयत्नः, ततः प्रयत्नसहकृतात्मवायुसंयोगात् कौष्ठ्यवायौ स्पन्दनं भवति, तेन स्पन्दनेन वायुरूर्द्ध्वंगच्छन् कण्ठादिस्थानेष्वभिघातं करोति, तताभिघातानन्तरं वर्ण-लक्षण-शब्दस्योत्पत्तिः । एतच्च प्रशस्त-पादाचार्य्य-मतं । एतन्मते शब्दस्य गुणपदार्थेऽन्तर्भावः ।

केचित्तु वायवीयावयवै-र्मूर्त्तिमतां शब्दानामुत्पत्तिरिति वदन्ति। तन्मते वक्तुरिच्छानुसारिणा प्रयत्नेन कौष्ठ्य-वायुषु स्पन्दनं जायते, ततश्च ते वायवः कण्ठादिस्थानेष्वाहताः शब्दरूपतां लभन्ते। प्रयत्न-भेदेनैकस्यैव वायोर्नानाविध-शब्दरूपेणाभिव्यक्तिः। केषाञ्चिन्मते सूक्ष्मो-ध्वनिः सर्व्वत्रैव वर्त्तते, स एवाकाश इत्युच्यते, अयञ्च सूक्ष्मत्वान्नोप-लभ्यते, यदा कण्ठताल्वाद्यभिघातेनाभिव्यक्तः श्रोत्रदेशमागतस्तदा व्यञ्जनेन वायुरिवोपलभ्यते, एते चान्ये च बहवो मतभेदाः शब्दमधि-कृत्य वर्त्तन्ते, तत्सर्व्वं शारीरक-शाबर-भाष्यादिभ्यो वाक्य-पदीया दिभ्यश्चावगन्तव्यं।

स्वाभिप्रायानुसारेण परान् बोधयितुं वर्णात्मकशब्दमुच्चारयन्ति वक्तार इति तु सर्व्वानुभवसिद्धः, वर्णात्मकशब्द एव भाषाशब्देनाभि-लप्यते, भाषयति प्रकाशयत्यर्थानिति व्युत्पत्तेः। तादृशबोधसाधनं च निरुक्त-शब्दमपेक्ष्य सुगमोपायो नाद्याप्याविष्कृतः, कदाप्या-विष्क्रियते न वेत्यप्यस्माभिर्वक्तुं न शक्यते, न शक्यते च कदा केन कुत्र कं बोधयितुमयमुपायः प्रकाशित इति च वक्तुं। आविष्कृति-कर्त्तृ-समयादि-निरूपणमाधुनिक-विद्वत्-समाजाभिलषितमपि निष्प्र-योजनत्वेन पूर्व्वाचार्य्यैर्वायस-दन्तनिरूपणमिवोपेक्षितं।

वर्णात्मकोऽपि शब्दो द्विविधः संस्कृतः प्रादेशिकश्च। प्रादेशिक एव चापभ्रंश इत्युच्यते। यः शब्दः संस्कारानन्तरं पठन-योग्यः स संस्कृतः शब्दः। अत्र च संस्कारो वागिन्द्रिय-सामर्थ्यं उपनयनं वा, वाक्सामर्थ्ये सत्युपनयनानन्तर-मेवास्याध्ययन-योग्यत्वात्। नैयायि-कादि-दार्शनिकैः संस्कृत-शब्दस्यैवेश्वरेच्छादि-रूपा शक्ति-रङ्गीक्रियते न त्वपभ्रंशानां, तेषां देशभेदेन विभिन्नतया तदङ्गीकारे गौरवात्। प्रादेशिकादर्थ-प्रतिपत्तिश्च शक्ति-भ्रमादित्यभिहितं पृः ६३, पः ४।

तत्तत्प्रदेशवासिभिर्व्यवहार्य्यः शब्दः प्रादेशिकः। स च वाक्-शैथिल्याद्यशक्ति-समुद्भूतत्वादपभ्रंश इति कथ्यते।

ये यत्प्रदेश-समुत्पन्ना यत्प्रदेश-समुत्पन्नैः संसृष्टा वा ते तत्प्रदेश-प्रचलित-शब्दमवलम्ब्यैव व्यवहारादिकं कुर्व्वन्ति। तत्तत्प्रदेश-प्रचलितासु भाषासु व्यवहार-नियमादौ तत्तत्प्रदेशवासिनामधिकारः। अतः सर्व्वा एव प्रदेश-प्रचलिता भाषास्तत्तत्प्रदेशवासिनामायत्ताः, अतस्ते तासु भाषासु नियमादिकं कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं स्वत एव समर्थाः, नैवं संस्कृत-भाषायां कस्यापि तादृशाधिकारः। सा हि न देश-प्रचलिता तत्तद्देशवासिभिर्नियमतोऽव्यवह्रियमाणत्वात्। अतएव सा देवभाषा इत्युच्यते। संस्कृत-भाषा व्यवहारे चानादि-प्रवाहागत-व्याकरणमेव नियामकं।

न्यायमते प्रमाऽनुभवश्चतुर्व्विधः, प्रत्यक्षमनुमितिरुपमितिः शाब्द-श्चेति। प्रमायाश्चतुर्व्विधत्वेन तत्करणान्यपि प्रमाणानि चतुर्व्विधान्येव। तानि च यथा यथं प्रत्यक्षे इन्द्रियाणि, अनुमितौ व्याप्तिज्ञानानि, उपमितौ सादृश्य-ज्ञानानि, शाब्दे च पदज्ञानानि। प्रत्यक्षमपि-लौकिकालौकिक भेदेन द्विविधं। लौकिकं पुनः षड्विध-लौकिक-सन्निकर्षजन्यत्वेन षड्विधं। षट् सन्निकर्षाश्च इन्द्रियसंयोग-स्तत्संयुक्त-समवायस्तत्संयुक्त समवेत-समवाय इन्द्रिय-समवायस्तत्स-मवेत-समवायो विशेषणता चेति। अलौकिकन्तु त्रिविधालौकिक-सन्निकर्षजन्यतया त्रिविधं, त्रयः सन्निकर्षाश्च सामान्यलक्षणो ज्ञान-लक्षणो योगजश्चेति। प्रथममलौकिकं यथा कस्मिंश्चिदिन्द्रिय-सन्नि-कृष्टे गवादौ गोत्वादि-ज्ञानानन्तरं इन्द्रियाऽसन्निकृष्टेऽपि गवादौ यद्-गौरित्याकारकं गोत्व-प्रकारक-ज्ञानं जायते तदेव।

द्वितीयं यथा पूर्व्वं केनापि पुरुषेण घ्राणेन्द्रियेः चन्दन-खण्डस्य सुगन्धोऽनुभूतः, ततस्तस्मिन्नेव-खण्डे घ्राणासंसृष्टे चक्षुःसन्निकृष्टे च यत् सुगन्धं चन्दनमिति चाक्षुषं ज्ञानं जायते तत्। एतच्च स्मृत्युप-नीतस्य सुगन्धस्य भानरूपत्वात् उपनीत-भानं उपनीत-प्रत्यक्ष-ञ्चोच्यते।

तृतीयं यथा योग-प्रभावेण योगज-संस्कारात् योगिनां ज्ञानं। प्रत्यक्षस्य विस्तारोऽनुमित्यादेर्विचारश्च न्यायसिद्धान्त-मुक्तावली प्रभृतितोऽवगन्तव्यः।

शब्दादर्थस्यानुभवो जायते इत्यत्र नास्ति कश्चिद्विवादः। तथा च यया रीत्या स भवति सा रीतिः प्रदर्श्यते। क्वचिदुच्चारणात् क्वचिच्च लिप्याद्यात्मकरेखा-विशेषज्ञानाच्छब्दस्य प्रत्यक्षमनुमानं स्मरणं वा जायते, ततः शब्दार्थयोरन्योऽन्य-सम्बन्धज्ञानं, ततोऽर्थस्योपस्थित्यपर-नामधेय-स्मरणं, ततः स्मृतयोरर्थयोः स्मृतानामर्थानां वा एकेनापरस्य यः संसर्गस्तस्यानुभवो जायते, अयमेव चानुभवः शाब्दबोधोऽन्वयबोध इति चोच्यते।

"घटः" इत्यत्र द्वौ शब्दौ, "घट" इति "सु" विभक्तिरिति च। तत्र "घट"शब्दस्य कुलाल-निर्मित-पदार्थ-विशेषेण "सु"विभक्ते-श्चैकत्वसंख्यया समं शक्त्याख्य-संसर्गोऽस्ति, तज्ज्ञानात्तयोः स्मरणं, तत एकत्वघटयोर्यः संसर्गस्तस्य ज्ञानं भवति। एतदेव शाब्दज्ञानं। केवलादेकस्मात् शब्दात् शाब्दबोधो न जायते। यत्रैकस्यैव शब्दस्यो-च्चारणं तत्र तदर्थस्य स्मरणमेव भवति, न तु तदुत्तरभावी शाब्दबोधो-ऽपीति। एकैक-शब्द एव पदमित्युच्यते, मिलितं पदद्वयं तदधिकं वा ऽऽकांक्षादियुक्तं वाक्यमिति, मिलितं वाक्यद्वयं तदधिकं वा महा-वाक्यमिति च कथ्यते, तदंश-रूपवाक्यन्तु खण्डवाक्यमित्युच्यते। पदन्तु क्वचिदेकवर्णात्मकं क्वचिच्चानेक-वर्णात्मकमपि। अनेकवर्णात्मके पदे एकपदत्व-व्यवहार एकार्थ-स्मारकत्वेनोपपादनीयः, एवं वाक्यद्वया-द्यात्मक-महावाक्येऽपि विशिष्टैकार्थशाब्दबोधकत्वेन एकवाक्यत्व-व्यवहारः समर्थनीयः। शब्दस्यार्थेन सम्बन्धो द्विविधः, सङ्केतो लक्षणा च। सङ्केतः शब्दार्थयोः साक्षात्-सम्बन्धरूपः। लक्षणा च परम्परा-सम्बन्धरूपैव। यस्य शब्दस्य ज्ञानानन्तरमेव येनार्थेन सम्बन्धज्ञानं जायते तेनार्थेन तस्य शब्दस्य साक्षात् सम्बन्धः, यस्य च शब्दस्य केनचिदर्थेन सम्बन्धज्ञाने जाते सति तादृशार्थ-सम्बन्धो-

यस्मिन्नर्थे ज्ञायते तस्य शब्दस्य तस्मिन्नर्थे परम्परा-सम्बन्धः। साक्षात्-सम्बन्ध एव सङ्केतः इत्युच्यते। परम्परासम्बन्धस्तु लक्षणेति। सङ्केतोऽपि द्विविधः नित्यानित्य-भेदात्। नित्य-संकेतः शक्तिरित्युच्यते। स च न्यायमते अस्माच्छब्दादयमर्थो वोद्धव्य-इत्याद्याकारकेश्वरेच्छादि-रूपः, ईश्वरानङ्गीकर्त्तृमीमांसकादिमते च वक्ष्ये दाहानुकूल-शक्तिवत् कश्चिदतिरिक्तः शक्तिनामक-पदार्थ-विशेष इति।

शब्दस्य-शक्त्यास्मृतोऽर्थः शक्यार्थ इत्युच्यते, शक्त्याऽर्थस्मारकं पदं शक्तं वाचकञ्चोच्यते। अनित्यसङ्केतः परिभाषेत्युच्यते सा च शास्त्र-कारादीनां अस्मात्शब्दादयमर्थो वोद्धव्य इत्यादीच्छा-रूपा, तया स्मृतोऽर्थः परिभाषित इत्युच्यते, तयार्थवोधकं पदञ्च पारिभाषिक-मिति। परिभाषा च शास्त्रकारादि-सङ्केतित नदी-वृद्ध्यादिपदेषु प्रसिद्धेति। लक्षणया स्मृतोऽर्थो लक्ष्यार्थः, तया वोधकं पदन्तु लाक्षणिकं। लक्षणापि नानाविधैव पश्चाद्व्यक्ता भविष्यति।

एवञ्च शब्दस्य सङ्केतेन लक्षणया वा स्मृतयोरर्थयोः स्मृतानामर्थानां वा एकेनापरस्य यः संसर्ग-स्तस्यवोधः शाब्दवोधोऽन्वयवोधो वेति पर्य्य-वसितं। शब्दादुपस्थितानामेवार्थानां एकेनापरस्य सम्बन्धः शाब्द-वोधस्य विषयो-भवति। न तु शब्दं विनोपस्थितानामर्थानां सम्बन्धः। यस्य शब्दस्यार्थेन समं यस्य शब्दस्यार्थ-सम्बन्धः शाब्दवोध-विषयो भवेत् तयोरर्थयोरव्यवधानभावेन शब्दादुपस्थिति-रावश्यकी, अतएव काव्यादौ व्यवहितान्वयस्य दोषत्वमुक्तं। एषैवोपस्थिति-रासत्तिरित्यु-च्यते, सा च शाब्दवोधे कारणं। घटमित्युक्ते "घट" पदार्थ "अम्"-पदार्थ-कर्म्मत्वयोः परस्परं यः सम्बन्धस्तस्य वोधो भवति, किन्तु घटःकर्म्मत्व-मित्युक्ते तादृशवोधो न भवतीत्यत आकांक्षाज्ञानमपि शाब्दवोधस्य-कारणमङ्गीकार्य्यं। आकांक्षा च यद्जातीयवर्ण-विशिष्टपदस्याव्यव-हित-भावेन पूर्व्वं परतो वा यद्-जातीयवर्ण-विशिष्ट-पदानामभावे सति शाब्दवोधो न जायते तत्तद्-जातीय-पदयोरव्यवहित-पौर्व्वापर्य्यभावे-

नावस्थितिः। आकांक्षाज्ञानस्य कारणत्वञ्च फलं दृष्ट्वा कल्पनीयं। कस्य किं कार्य्यं किञ्च कारणमित्यादीनां फलदर्शनेन कल्पनीयत्वात्। न हि फलमजानन् कोऽपि कार्य्यकारणभावं कल्पयितुं समर्थः। यत्पदार्थेन समं यत्पदार्थस्य सम्बन्धोऽसम्भाव्यः, तयोः सम्बन्ध-वोधो न भवति, अतो योग्यताज्ञानमपि शाब्दवोधे हेतुः। योग्यता च यत्पदार्थे यत्पदार्थस्य सम्बन्धः शाब्दवोध-विषयो भवेत् तत्पदार्थे तत्पदार्थस्यावस्थितिः। योग्यता-ज्ञानाभावात् वह्निना सेक-इत्यादौ न शाब्दवोधः, सेकपदार्थे वह्निरूप-करणजन्यत्वस्याभावात्। केनचित् भोजन-समये सैन्धवमानयेत्युक्तं, सैन्धवशब्दस्य चाश्व-लवनोभयवाच-कत्वं, एवञ्चात्र किमश्वस्य लवणस्य वा वोधो भवेत्? इत्यत्रैकतरवोधे किञ्चिन्नियामकमन्वेष्टव्यं। शब्दोच्चारयितु-रभिप्रायातिरिक्तं किम-प्यत्र नियामकं कल्पयितुं न शक्यते। सुतरां तदभिप्राय एव तत्र नियामकः। तथा च वक्ता यदर्थवोधाभिप्रायेण यः शब्द उच्चारित-स्तस्मात्-शब्दात् तदर्थस्य वोधोभवति, एवञ्च तदर्थवोधाभिप्रायेणो-च्चरितत्वरूपस्य तात्पर्य्यस्य ज्ञानं शाब्दवोधे हेतुः। अभिप्रायश्च वक्तुः कार्य्यप्रणालीदर्शनेनानुमातव्यः। नव्य-नैयायिकास्तु तात्पर्य्य-ज्ञानस्य शब्दवोधहेतुत्वं नाङ्गी-कुर्व्वन्ति, तात्पर्य्यज्ञापकत्वेनाभि-मतानां वक्तृकार्य्य-प्रणाली-दर्शनादीनां शाब्दवोधात् प्रागवश्यं अव-[illegible] तेषां कारणत्वाङ्गीकारेणैव सर्व्वदोष-वारण-सम्भवात्।

वृद्ध-मीमांसकास्त्वेवंवदन्ति। यो यमर्थं यथार्थतया प्रत्यक्षादि-भिर्जानाति, तस्मिन्नर्थे परेषां ज्ञानमुत्पादयितुं स तदर्थवोधक-शब्दस्योच्चारणं करोति; न त्वन्यथा। एवञ्चायं शब्द-स्तदर्थविषयक-यथार्थज्ञानवता पुरुषेणोच्चरित इत्याकारक-ज्ञानं शाब्दवोधे हेतुः। तादृश-यथार्थज्ञानवांश्च आप्त इत्युच्यते, तथा चाप्तोच्चरितत्व-ज्ञानस्य तन्मते शाब्दवोध-हेतुत्वमङ्गीकृतं। एवञ्च वाक्यार्थ-विषयक-यथार्थ-ज्ञानवदुच्चरितत्वरूपस्याप्तोक्तत्वस्यांशीभूतो वाक्यार्थोऽपि तादृशज्ञानस्य

विषयः इति शाब्दबोध-विषयस्य शाब्दबोधकारणो-भूतेनाप्तोच्चरितत्व-ज्ञानेन विषयो-कृतत्वात् नियमतः पूर्व्वज्ञानविषयीभूत एवार्थः शाब्द-बोधस्य-विषयः, तथा च ज्ञातविषये समुत्पन्नः शाब्दबोधो न प्रमा, ज्ञातार्थ-प्रकाशरूपत्वात्, तन्मते अज्ञातार्थ-प्रकाशरूपस्य यथावस्थि-तार्थज्ञानस्यैव प्रमात्व-स्वीकारात्, एतत् सर्व्वं न न्यायवित्-सम्मतं, तादृश-ज्ञानस्य कारणत्वानङ्गीकारात्, शुकाद्युच्चरितवाक्या-दपि शाब्दबोधोदयेन तादृश-कार्य्य-कारण-भावस्य व्यभिचारादि-दोष-ग्रस्तत्वाच्चेति शिवं ।

# सूचीपत्रम् ।

## शब्दशक्ति-प्रकाशिका-समासान्त-भागस्य सूचीपत्रं ।

शब्दशक्ति-प्रकाशिकायाः समासान्तभागे धृतानां
ग्रन्थकर्तॄणां नामानि ।

## शब्दशक्ति-प्रकाशिकायाः समासान्तभागे धृतानां ग्रन्थानां नामानि।

# शब्दशक्ति-प्रकाशिकायाः समासान्तभागस्य

## शुद्धिपत्रं ।

| | पृः | पः | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| मूः | १ | ८ | साकाचासन्ना | साकांक्षासन्ना च |
| टिः | १ | ७ | शव्दानां | शब्दानां |
| ,, | १ | १० | व्रह्य | व्रह्म |
| ,, | ३ | १ | शुव्दस्य | शब्दस्य |
| ,, | ३ | २ | विशिष्ट | विशिष्ट |
| मूः | ४ | ७ | तग्दोचर | तद्गोचर |
| ,, | ५ | १३ | नेते | नेते |
| टिः | ५ | ५ | शव्दस्य | शब्दस्य |
| मूः | ६ | १२ | अन्यवधि | अन्यविध |
| टिः | ६ | ५ | द्विविधं | द्विविधं |
| मूः | ८ | १५ | घटापि | घटादि |
| टिः | १२ | १ | (ख) | (क) |
| मूः | १७ | ६ | ह्तु | हेतु |
| ,, | २० | ६ | साकंच | साकांक्ष |
| ,, | २५ | १० | दिशावमेयः | दिशावसेयः |
| टिः | २५ | १२ | मावः | भावः |
| ,, | ३२ | ७ | विरुद्धर्म्माणां | विरुद्धधर्म्माणां |
| मूः | ३३ | १ | तोरि | तोरे |
| ,, | ३७ | ३ | जातेनिरवच्छिन्न | जातेर्निरवच्छिन्न |
| ,, | ३८ | १ | गतिमत्वा | गतिमत्त्वा |
| ,, | ३८ | ६ | मिथो, | मिथो |

| | पृ: | प: | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| मू: | ४० | २ | तन्मात्र | तन्मात्र |
| ,, | ४२ | ८ | वेत्ति | वित्ति |
| ,, | ५५ | २ | तदोपाधिक | तदौपाधिक |
| ,, | ५६ | ८ | गोत्वादि | गोत्वादि |
| ,, | ५८ | ५ | नाम्न | नाम्न |
| ,, | ६८ | २ | असत्वात् | असत्त्वात् |
| टि: | ६८ | १२ | जहन् | जहत् |
| मू: | ७८ | ३ | तयोकांचा | तयोराकांक्षा |
| ,, | ८७ | ४ | गाम्भीर्य्यादि | गाम्भार्य्यादि |
| ,, | १०३ | ७ | असत्वात् | असत्त्वात् |

# सांकेतिक-शब्दाः ।

| | |
|---|---|
| सूः | सूत्रं |
| अः | अध्यायः |
| आः | आह्निकं |
| काः | कारिका |
| टिः | टिप्पनी |
| पंः | पंक्तिः |
| पृः | पृष्ठं |
| मूः | मूलं |

# शब्द-शक्ति-प्रकाशिका।

## प्रतिज्ञा।

तर्क-(क) तत्त्व-(ख)ज्ञ विदुषा विदुषां तोष-कारिका (ग)।
क्रियते जगदीशेन (घ) शब्द-शक्ति-प्रकाशिका (ङ)॥ १॥

## अथ मङ्गलाचरणं।

ग्रन्थारम्भे विघ्न-विघाताय समुचितां शब्दमयीं देवतां ग्रन्थकृत् स्मरतिस्म—

(च) अनुभव-हेतुः सकले सद्यः समुपासिता मनुजे।
साकाङ्क्षासन्ना स्वार्थे योग्या सरस्वती देवी॥ २॥

(क) "तर्क" पूर्व्वपक्षमित्यर्थः।

(ख) "तत्त्वं" सिद्धान्तमित्यर्थः।

(ग) "विदुषां" मुमुक्षूणां, "तोषकारिका" मोक्षजनिका, आनन्द प्रयोजिका वेत्यर्थः। अनेन प्रयोजनं प्रदर्शितं।

(घ) जगदीश इति ग्रन्थकर्त्तुर्नाम, स चायं जगदीशस्तर्कालङ्कारोपाधिको न्याय-विद्या-प्रचारेण बङ्गभूमेर्गौरवं बर्द्धयामास।

(ङ) शब्दानां शक्तिरर्थबोधसामर्थ्यं सङ्केत-लक्षणान्यतररूपं, "तत्प्रकाशिका" तद्बोधिकेत्यर्थः।

(च) मङ्गलार्थं प्रयुक्तेनानेन शाब्दबोधस्वरूप-तत्कारणानि प्रदर्शितानि। वाग्रूप-सरस्वत्या देवत्वञ्च "चत्वारि शृङ्गास्त्रयोऽस्यपादा" इत्यादि श्रुत्या ब्रह्मरूपत्व-प्रतिपादनादवगन्तव्यं।

इतरा तावद्देवता सम्यगुपासितापि उपासके न साकाङ्क्षा ( क ) साकाङ्क्षापि वा नासन्ना ( ख ) आसन्नापि वा न स्वस्योपासितुरभिलषितार्थे योग्या ( ग ) योग्यापि वा न समस्तोपासकेऽनुभवस्य जनिका ( घ ) जनिकापि वा न सद्यः, किन्तु कालक्रमेणैव। सरस्वती तु देवी सकल-मनुज एव साकाङ्क्षासन्ना योग्या चोपासिता सती सद्य एवानुभवं तनुते, अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्य्यं ॥ २ ॥

इति मङ्गलाचरणं।

( क ) नार्द्रहृदयेत्यर्थः।

( ख ) न निकटवर्त्तिनीत्यर्थः।

( ग ) न समर्थेत्यर्थः।

( घ ) "अनुभव" तत्त्वज्ञानं तस्य जनिकेत्यर्थः।

## अथ शब्द-प्रामाण्य-विवेचनं।

अथ शब्दो यदि (क) स्वार्थस्यानुभवे भवेद्धेतुः प्रात्यक्षिक एवौपनायिके (ख) तत्र नाकाङ्क्षाद्युपयोगः। तद्भिन्ने चेदानुमानिक एव, न च तत्र सद्यः साकाङ्क्षत्वादि-धीमात्रेण, व्याप्ति-(ग) बुद्ध्या-देरप्यधिकस्यापेक्षणादित्याशङ्कामपनेतुमन्वय-बोध-नामकमनुभवान्तरं दर्शयति (घ)।

साकाङ्क्ष-शब्दैर्यो बोधस्तदर्थान्वय-गोचरः।
सोऽयं नियन्त्रितार्थत्वा-(ङ)न्न प्रत्यक्षं न चानुमा ॥ ३ ॥

अस्ति तावद्धीरस्ति गामानयेत्यादि-साकाङ्क्षशब्देभ्यः स्व-स्व-वृत्त्या (च) पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो (छ) बोधो, यत्रान्वय-व्यतिरेकाभ्या (ज) साकाङ्क्षादिमत्तया

(क) शब्दस्यानुभवहेतुत्वे विवादादाह "यदी"ति। ये शब्दस्यानुभवहेतुत्वं नाङ्गीकुर्व्वन्ति तन्मते शब्दादर्थस्य स्मरणमात्रं भवति न तु ततः कश्चिद्विशिष्टानुभवोपीति भावः।

(ख) औपनायिकप्रत्यक्षन्तु ज्ञानलक्षणाजन्यप्रत्यक्षं, तच्च भूमिकायां प्रपञ्चितं।

(ग) साध्यहेत्वोरविनाभावः साध्यशून्ये हेतोरनवस्थानपर्य्यवसितो व्याप्तिरित्यर्थः।

(घ) प्रत्यक्षानुमित्यादिभ्यो भिन्नमनुभवं दर्शयतीत्यर्थः।

(ङ) पदोपस्थाप्यार्थस्यैवावगाहित्वादित्यर्थः।

(च) "वृत्तिः" सङ्केतो लक्षणा वेत्यर्थः।

(छ) "विलक्षणः" प्रत्यक्षानुमित्युपमितिभ्यो भिन्न इत्यर्थः।

(ज) तत्सत्त्वे तत्सत्त्वमन्वयः, तदसत्त्वे तदसत्त्वं व्यतिरेकः।

शब्दस्यावगमो हेतु र्न तु पदार्थानामुपस्थितिमात्रं, विशिष्ट-मतेरानुभविकत्वात् (क)। अन्यथा (ख) नुमितेरप्यपलापापत्तेः।

न चासौ स्मृतिः, समानाकारक-संस्काराप्रभवत्वात्। नापि साक्षात्कारः साकाङ्क्ष-पदेनैव प्रकारान्तरेणाप्युपस्थितार्थस्योपनय-मर्य्यादयाऽ-(ग) वगाहितापत्तेः। न चेष्टापत्तिरनुभव-विरोधात् (घ); (ङ) तदुत्तरं तथाविधानुव्यवसायापत्तेश्च। तत्तदर्थ-विषयक-शाब्द-मतेरनुव्यवसायं प्रति तत्तदर्थ-साकाङ्क्ष-पदजन्य-तग्दोचर-शाब्दत्वेन विषय-विधया हेतुत्व-कल्पनायामतिगौरवात्, इतर-वाध-लब्धस्य छिद्रेतरत्वादेरपदार्थस्या-(च) प्यवगाहित्वेन शाब्दमतेरनुव्यवसीय-मानत्वात् (छ), गवादावस्तित्वादेरिवास्तित्वादावपि गवादेर्भान-प्रसङ्गस्य तावताप्यनुद्धाराच्च (ज)।

(झ) अतएवासौ नानुमितिरपि पूर्व्वपरामृष्टस्य वस्तुमात्रस्ये-वासति वाधके शाब्दधी-(ञ) विषयतापत्तेः। न च तत्तदर्थगोचर-

(क) अस्तित्वेन गां जानामीत्यनुव्यवसायसिद्धत्वादित्यर्थः। न्यायमते अनुव्यवसायो हि ज्ञानास्तित्वे प्रमाणं, अनुव्यवसायो नाम ज्ञानानां लौकिक-मानस-प्रत्यक्षमिति भावः।

(ख) विशिष्टज्ञानानुव्यवसायस्यास्वीकारे इत्यर्थः। "अनुमितेरपी"ति तथा च पर्व्वतो-वह्निमानित्यनुमिति-स्थलेपि वह्निं जानामि पर्व्वतं जानामीत्यनुभव एव न तु वह्निमत्तया पर्व्वतं जानामीत्याद्यनुभव इत्यस्यापि सुवचत्त्वादिति भावः।

(ग) ज्ञान लक्षणयेत्यर्थः।

(घ) पदोपस्थाप्यार्थावगाहिताया एवानुभवसिद्धत्वादिति भावः।

(ङ) अनुभवविरोधे विप्रतिपन्नं प्रत्याह "तदुत्तर" मित्यादि।

(च) "अपदार्थस्य" शब्दानुपस्थितस्येत्यर्थः।

(छ) ननूक्तस्थलेच्छिद्रेतरत्वज्ञानं विवादग्रस्तं प्राचीनैः शब्दोपस्थाप्यस्यैव शाब्दधीविष-यत्वाभ्युपगमात्, परन्तु इतर-वाधवशात् छिद्रेतर-घट एव घटत्वेन भासते इत्यतो दूषणान्तरमाह "गवादा" वित्यादिना।

(ज) प्रत्यक्षे विशेष्य-विशेषणभावस्यानियमादिति भावः।

(झ) "अतएवे"त्यस्य नियन्त्रित-विषयत्वादेवेत्यर्थः।

(ञ) अनुमितिरूप-शाब्दधीत्यर्थः।

शाब्दधियं प्रति साकाङ्क्षपदजन्यायास्तत्तदर्थ-गोचर-स्मृतेः कारणत्व-कल्पनान्नैष दोषः, तावताऽपि पदार्थानामन्वयधी-दशायामपदार्थानामपि स्व-स्व-सामग्री-वलेन प्रत्यक्षानुमित्योरन्यतर-प्रसङ्गस्य दुर्व्वारतापत्तेः।

शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादि-सामान्यं प्रति शाब्द सामग्र्याः प्रतिवन्धकत्वासम्भवात्, शाब्दान्य-प्रत्यक्षत्वावच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षभिन्नत्व-कल्पनायामेव लाघवात्, मानाभावाच्च (क) ॥ ३ ॥

अथ लिङ्गजत्वेनान्वय-बुद्धेरनुमितित्व-सिद्धौ अनायत्या शाब्दान्यानुमितौ तत्सामग्र्याः प्रतिवन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्दधियः खण्डयति—

योग्यतार्थगताऽऽकाङ्क्षा शब्दनिष्ठाऽनुभाविका।
प्रत्येकं वा मिलित्वा वा नैते (ख) लिङ्गमसिद्धितः ॥ ४ ॥

गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्वाध-विरहित्व-(ग) रूपं योग्यतामात्रं लिङ्गं वाधनिश्चयाभावेनान्यथासिद्धस्य योग्यता-निश्चयस्यानावश्यकत्वात्, योग्यतामात्र-लिङ्गक-संसर्गानुमानस्यान्वय-बुद्धित्वे घटः कर्मत्वमित्यादि-स्थलीयस्यापि तस्य तथात्वापातात् (घ), योग्यतायाः संशयस्थलेप्यन्वयबुद्धेरानुभविकत्वाच्च (ङ)।

---

(क) प्रामाणिकं गौरवं न दोषायेत्यत आह "मानाभावाच्चे"ति।

(ख) योग्यताकाङ्क्षे इत्यर्थः।

(ग) अस्तित्वाभावाभावरूपमित्यर्थः। एक-पदार्थेऽपरपदार्थवत्त्वरूप-योग्यतोपादाने साध्याविशेषापत्तेरिति भावः।

(घ) यत्र घटः कर्म्मत्वमित्याकारकशब्दस्य कथञ्चिज्ज्ञानं वर्त्तते तत्र योग्यतालिङ्गक-परामर्शादि-वशात् कर्म्मत्वं घटवदित्यनुमितिर्जाता, तादृशानुमितौ शाब्दत्व-व्यवहारापत्तिरिति भावः।

(ङ) अनुमितौ लिङ्गनिश्चयः कारणं एवं सति योग्यता-संशयजन्य-शाब्दबोधस्यानुमितित्वासम्भवः इति भावः।

गवादावस्तित्वादेरन्वय-वोधानुकूलानुपूर्व्वी-पर्य्यवसिता त्वाकाङ्क्षा स्वयं असिद्धा (क) कथमस्तित्वादेरन्वय-वोधं साधयेत्।

अतएवास्तित्वादेर्योग्यता-विशिष्टमप्याकाङ्क्षावत्त्वं गवादौ न तदन्वयस्यानुभावकमसिद्धेः।

(ख) अथ गौरस्तितावान् स्वधर्म्मिकास्तित्वान्वय-वोधानुकूलाकाङ्क्षादिमत्पद-स्मारितत्वात् घटवत्, अस्तिपद-समभिव्याहृत-गौः पद-स्मारितत्वाद्वा चक्षुर्वत्, इत्याद्यनुमानत एवान्वय-धियोऽन्यथा-सिद्धिः (ग)। पदानामेकवाक्यतापन्नत्वरूप-समभिव्याहृतत्व-निश्चयं विना न्याय-नयेप्यन्वय-वोधस्यानुत्पत्त्या पूर्व्वं तस्यावश्यकत्वात्। (घ) न च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचारः; स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्करत्वात् (ङ)। एकविध-(च)-व्यभिचारज्ञान-सत्त्वेऽपि अन्यविधव्याप्ति-निश्चयस्य सम्भवाच्च, समानाकारकस्यैव व्यभिचार-ग्रहस्य व्याप्तिधी-विरोधित्वादिति नव्य-वैशेषिकाः। तन्न गवादेः पदस्मारितत्वाद्यभाव-ग्रहदशायामुत्पन्नस्य गौरस्तीत्याद्यन्वय-वोधस्योक्त-हेतुनाऽप्यनिष्पत्तेः; पद-जन्या हि पदार्थ-स्मृतिः

(क) पक्षवृत्तित्वाभाववतीत्यर्थः।

(ख) हेत्वन्तरवादिनव्यवैशेषिकमतं दूषयितुमुपन्यस्यति "अथे"त्यादिना।

(ग) अनुमितित्वसिद्धिरित्यर्थः

(घ) अस्तित्वं वर्त्तमानकाल-सम्बन्धित्वमित्यभिप्रायेण शङ्कते "न चे"त्यादिना।

(ङ) स्वार्थपरार्थभेदेनानुमानं द्विविधं, स्वस्यानुमातुरर्थसाधकं स्वार्थं, परयोर्वादिप्रतिवादिनोर्जयपराजयसाधकं मध्यस्थानुमानं परार्थं। समानाकारक-व्यभिचारज्ञानमेवानुमिति-जनक व्याप्तिधी-विरोधि, तथा च स्वार्थानुमानस्थले सतोपि व्यभिचारस्योद्भावकाभावेनाज्ञानत्वादकिञ्चित्करत्वमुक्तं। "स्वरूपसतः" अज्ञातस्येत्यर्थः। "अकिञ्चित्करत्वात्" अप्रतिवन्धकत्वादित्यर्थः।

(च) ननु सति व्यभिचारे कदाचित्तज्ज्ञानस्यापि सम्भवेन व्यभिचारज्ञानकालीनान्वयबुद्धौ अनुमितित्वकल्पनमसम्भवीत्यत आह—"एकविधे"त्यादि। सर्व्वत्रैकविध-व्यभिचार-ज्ञान-कालेऽन्यविध-व्यभिचार-ग्रहकल्पने मानाभावादिति भावः।

(क) स्वरूपसत्येवान्वय-बुद्धावुपयुज्यते न तु ज्ञाता, प्रमाणाभावात्, पदैस्स्मारितस्यापि तत्-स्मारितत्व-ग्रह-दशायामन्वयधी-प्रसङ्गाच्च ।

एतेन (ख) गौ'पदं अस्तित्ववद्गो-गोचरज्ञान-पूर्व्वकं अस्तिपद-साकाङ्क्ष-गौः पदत्वात् यन्नैवं तन्नैवं यथाकाशमित्येवं पदपक्षकमप्यनुमानं कणभक्षपक्षानुसारिणामपास्तं, (१) गवादि-पदानां ज्ञान-पूर्व्वकत्वाद्यभाव-निश्चय-दशोत्पन्नस्य गवादिमुख्यधर्म्मिकास्तित्वाद्यन्वय-बोधस्य सार्व्वजनीनस्योक्तलिङ्गादप्यनिष्पत्तेः, वाक्यार्थस्यापूर्व्वत्वेन (ग) तद्गर्भ—साध्यस्य प्रायशः (घ) प्रागनुपस्थित्यानुमानायोगाच्च ।

वस्तुतो (ङ) वाक्यार्थबोधस्यानुमितित्वे सत्येव साकाङ्क्षपदत्वादि लिङ्गकत्वं कल्प्यं, तदेव त्वसिद्धं प्रमाणाभावात्, अस्तित्वेन गामनुमिनोमीत्यादेरनुव्यवसायस्य तत्रासत्त्वात्, प्रत्युत गौरस्तीति-वाक्यादस्तित्वेन गौः श्रुतो न त्वनुमित इत्येवानुभवाच्च । "श्रोतव्योमन्तव्य" इत्यादि—प्रयोग-दृष्ट्या शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदकत्वात् । न चासौ भ्रान्ति-(च) बाधकाभावात्, अन्यथा (२) न चेदेवं अनुमितिमात्रस्य पदजन्यत्वं प्रकल्प्य अन्वयबोधत्वं किमिति न रोचयेः ? अनुमिताविवान्वय-मतावपि समान-विषयकप्रत्यक्ष-सामग्र्यादेः प्रतिबन्धकतया तदभावजन्यत्वेनैकशेषस्य दुष्करत्वात् । पटादिपदैरर्थस्य

(१) परामृमिति हस्तलिखित-पुस्तके पाठः ।

(२) अन्यथेति नास्ति हस्तलिखित-पुस्तके ।

---

(क) "स्वरूपसती" अज्ञातेत्यर्थः ।

(ख) वक्ष्यमाणदोषिणेत्यर्थः ।

(ग) प्रागज्ञातत्वेनेत्यर्थः ।

(घ) अनुवादस्थले वाक्यार्थस्यापूर्व्वत्वाभावात् "प्रायश" इत्युक्तं ।

(ङ) योग्यतानिश्चयस्य कारणत्वानुरोधेन न्यायनयेप्यपूर्व्ववाक्यार्थस्थले शाब्दबोधानभ्युपगम आवश्यकः, किञ्च व्यतिरेकव्याप्तिज्ञानादेव तत्रानुमितिर्भविष्यति तथा च न कश्चिद्दोष इत्यत आह "वस्तुत" इति ।

(च) "असौ" उक्तानुव्यवसायः । "भ्रान्तिः" शाब्दत्वांशे भ्रम इत्यर्थः ।

पटादेः स्मरणे सति तदीयव्यापारादेरिव दहनाद्यर्थैस्तदर्थक-वह्न्यादि पदस्य स्मरणोत्तरं तदीयाकाङ्क्षाद्यवगमस्य सुवचत्वात्, वाच्यतावद्वाचकत्वस्यापि सम्बन्धस्य स्मारकतायामविशिष्टत्वात्। न च ह्रदे धूमाभाव इत्याद्यप्रसिद्ध-साध्यकानुमिति-स्थले पूर्व्वं साध्यस्यानुपस्थित्या तेन साध्य-वाचक-पदस्य स्मरणासम्भव इति वाच्यं तत्र साध्य-ज्ञान-विरहेपि उद्बोधकान्तरात् साध्य-वाचक-पद-स्मरण-सम्भवात्।

(क) किञ्च घटादन्य इत्यादि-वाक्यात् घटप्रतियोगिताकान्यत्वादि-प्रकारेण (१) निरवच्छिन्न विशेष्यताको घटान्यस्य बोधः सर्व्वजन-सिद्धः, स चास्मकं (ख) तादृशानुपूर्व्वीक-पद-ज्ञानत्वेन तथाविधान्वय-बोधं प्रति हेतुत्वादुपपद्यते, परेषान्तु (ग) भेदो घट-प्रतियोगिताकस्तत्साकाङ्क्षान्य-पद-स्मारितत्वादित्यादि-रीत्यानुमित्या न तन्निर्व्वाहः, पक्षविधयान्यत्वस्य भानेप्यन्यत्व-प्रकारेणान्यस्य तत्राभानात् (घ)। न च (ङ) तत्रान्यपदमेव घटान्यत्व-प्रकारेण घटान्यस्य लक्षकं, घटादित्यस्य व्यर्थतापत्तेः। अन्यथा घटोस्तीत्यादावपि घटापिपदस्यैवास्तित्वादिविशिष्ट-घटादि-लक्षकत्व-सम्भवात्तत्राप्यस्तित्व-घटयोरन्वयबोधापलापापत्तेरित्यास्तां विस्तरः॥ ४॥

(च) साकाङ्क्षत्वादिधीरिव (२) वाक्यार्थ-गोचर-यथार्थज्ञानव-

(१) प्रकारक इति हस्तलिखित पुस्तके पाठः।

(२) साकाङ्क्षत्वादेरिवेति हस्तलिखित-पुस्तके पाठः।

---

(क) प्रतिवन्धेरनुत्तरत्वादाह किञ्चेति।

(ख) नैयायिकानामित्यर्थः।

(ग) वैशेषिकाणामित्यर्थः।

(घ) निर्द्धर्म्मितावच्छेदककानुमितेरनभ्युपगमादन्य-पक्षकानुमितेश्चासम्भवादिति भावः।

(ङ) नन्वेतादृशबोधः स्मरणरूपोऽन्यपदमेव तादृशभेदाश्रय-लक्षकमिति नोक्त-दोष इत्यत आह "नचे"ति।

(च) प्रकारान्तरेण वैशेषिक-मतं दूषयतां जरन्मीमांसकानां मतं दूषयितुमुपन्यस्यति "साकाङ्क्षत्वादिधीरिवे"त्यादि।

दुष्टत्व-रूपाप्तोक्तत्वस्यापि निश्चयः शाब्दधी-हेतुरतो नैक-पदार्थ-धर्म्मिकोऽपर-पदार्थस्यान्वय-बोधोऽनुमितिः, सिद्धि-सत्त्वे (क) विनाऽनुमित्सां तदसम्भवात्। परन्त्वनुमितिरन्य एव, किन्त्वसौ गृहीत-ग्राहित्वान्न प्रमा, यज्जातीय-विशिष्ट (ख) ज्ञानत्वावच्छेदेन समानाकार-(ग), निश्चयोत्तरत्वं तज्जातीयान्य-यथार्थ-ज्ञानस्यैवागृहीत-ग्राहित्वेन प्रमात्वात्। अतएव धारावाहिक-प्रत्यक्ष-व्यक्तीनां समानाकार-ग्रहोत्तर-वर्त्तित्वेऽपि न तासां प्रमात्वस्य हानिः, हानिस्तु समानाकारानुभव-समुत्थानां स्मृतीनामिति जरन्मीमांसकानां समाधानं निरस्यति—

नाप्तोक्तता तु वाक्यार्थ-गर्भा ज्ञातोपयुज्यते।
वाक्यार्थानामपूर्व्वत्वात्, संशयेऽप्यन्वयोदयात्॥ ५॥

यद्येक-पदार्थवदपर-पदार्थ-पर्य्यवसन्नस्य वाक्यार्थस्य ज्ञानवदुक्तत्व-रूपाया आप्तोक्ततायाः निश्चयः शाब्दमतेः कारणं स्यात्, स्यादपि तेनैव रूपेण साध्य-निश्चयेन प्रतिबन्धादेक-पदार्थ-पक्षिकाया अपर-पदार्थानुमितेरनुत्पादो न चैवं, शाब्दधियः पूर्व्वं वाक्यार्थस्योपस्थित्यनियमेन तद्गर्भस्याप्तोक्तत्वस्यापि मतेरनावश्यकत्वात्। अन्यथा वेदस्याप्यनुवादकतापत्तेः। एक-पदार्थेऽपर-पदार्थस्य, शब्दे वाक्यार्थज्ञानवदुक्तत्वस्य

(क) पक्षेसाध्यावधारणसत्त्वे इत्यर्थः, साध्यावधारणकाले विनानुमित्सामनुमितिर्न जायते इति न्यायवित्सिद्धान्त इति भावः।

(ख) अत्र विशिष्टपदेन अयथार्थज्ञान-व्यवच्छेदः सूचितः, मीमांसकनये विशिष्ट-विषयक-ज्ञानस्यैव यथार्थत्वात्, तथा चाविशिष्ट-विषयके ह्रदो वह्निमानित्यादिस्थलीयेऽसंसर्गाग्रहादि-विशिष्टशाब्दे निर्व्विकल्पक-स्मृत्यादौ च समानाकारक-निश्चयोत्तरत्वाभावात् शाब्द-स्मृत्यादि-जातीयानाम प्रामाण्य-क्षतिरतो "विशिष्टे"ति।

(ग) स्व-समानाकारत्वञ्च स्व-प्रकारता-व्यापक-प्रकारताकत्वमिति भावः।

संशयेपि ( १ ) शाब्द-मतेरुत्पादाच्च ( क )। अतएवा-( ख )प्तोक्तत्वस्य संशये व्यतिरेक-निश्चये चान्वय-बुद्धेरनुत्पादादवश्यं तन्निश्चयस्तत्र हेतु-रित्यपि ( ग ) प्रत्युक्तं, असिद्धेः ( घ )।

ननु माभूदाप्तोक्तत्वस्य निश्चयानुरोधेन सिद्ध-साधनं, तात्पर्य्यस्य तु स्यात् ( ङ ), तन्निश्चयस्यान्वयधी-हेतुत्वात्, अन्यथा ( च ) घट-कर्म्म-त्वादि-परत्वाभावस्य ( छ ) घट-कर्म्मत्वाद्यन्यमात्र-परत्वस्य वा निश्च-येऽपि घटमित्यादि-वाक्यात् कर्म्मत्वं घटीयमित्याद्यन्वय-बोधापत्तेरिति चेन्न कर्म्मता-धर्म्मिक-घटान्वय-धी-परत्वाभाव-निश्चय-दशायां प्रमेय-त्वादि-प्रकारेण घट-कर्म्मत्वादि-परत्वस्य निश्चयेऽपि घटीयं कर्म्मत्व-मित्यन्वय-मतेरनुत्पत्त्या कर्म्मता-धर्म्मिक-घटान्वय-बोध-परत्व-प्रका-रक-निश्चयत्वेनैव ( ज ) तात्पर्य्य-धियस्तस्यां ( झ ) कारणत्वेन वाक्यार्थस्य तत्रानिवेशात्।

---

( १ ) संशयेनापीति—हस्तलिखित-पुस्तके।

( क ) तथा च कार्य्यकारणभाव-ग्राहकान्वय-व्यतिरेक-व्यभिचारान्न तन्निश्चयस्य हेतुत्व-सम्भव इति भावः।

( ख ) आप्तोक्तत्वस्य संशयेऽपि शाब्दमतेरुत्पादादेवेत्यर्थः अस्य चाग्रिमेण "प्रत्युक्त"मित्य-नेनान्वयः।

( ग ) यस्य संशय-व्यतिरेक-निश्चयौ यदुत्पत्ति-प्रतिबन्धकौ तस्य निश्चयस्तद्धेतुरनुमितौ व्याप्तिनिश्चयवदिति प्रामाण्यवादे दीधितिकारैरभिहितमेतच्चानुमितौ व्यभिचार-ज्ञानस्य साक्षात्-प्रतिबन्धकत्वमिति मतमवलम्ब्यैवोक्तमिति भावः।

( घ ) आप्तोक्तता-निश्चयस्य हेतुत्वासिद्धेरित्यर्थ

( ङ ) तात्पर्य्यस्य तु निश्चयानुरोधेन सिद्ध-साधनं स्यादित्यर्थः।

( च ) तात्पर्य्यनिश्चयस्याहेतुत्वे इत्यर्थः।

( छ ) घटमितिवाक्ये घटकर्म्मत्त्वबोधकाप्रयुक्तोच्चरितत्वाभावस्येत्यर्थः।

( ज ) तथा च कर्म्मतात्वावच्छिन्न-विशेष्यता-निरूपित-घटत्वावच्छिन्न-प्रकारता-शालि-बोध-परत्व-प्रकारक-निश्चयत्वेनैवेत्यर्थः।

( झ ) अन्वयमतावित्यर्थः।

वस्तुतः (क) समानानुपूर्व्वीकस्यैव वाक्यान्तरस्य तस्यैव वा कालान्तरमन्तर्भाव्य घटीयकर्म्मत्व-परत्व-निश्चय-सत्त्वेऽपि श्रूयमाण-वाक्यव्यक्ताविदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभाव-निश्चये वा घटीयं कर्म्मत्वमित्याद्यन्वय-मतेरनुत्पादाद्विशिष्यैव तत्तद्वाक्यव्यक्ति-धर्म्मिकस्य घटकर्म्मत्वादि-परत्व-निश्चयस्य तत्तदन्वय-बोध-हेतुत्वमुपेयं, तथा च (ख) तत्तद्धेतुभूतानां प्रकरण-ज्ञानाभिधानामिव विज्ञान-व्यक्तीनां तथात्व-(ग)मुचितं अवश्यं क्रमपूर्व्ववर्त्तिताकत्वात्। अत एव (घ) सैन्धवमानयेत्यादावपि लवनपरत्व-धीर्न लवनाद्यन्वय-बुद्धौ हेतुः, किन्तु तदज्ञकत्वेनाभिमतं (ङ) भोजनादि-प्रकरणस्य प्रति-सन्धानमिति न्याय-सिद्धान्तः।

एवञ्च (च) वाक्यार्थ-प्रतीति-जनकतयाऽभिप्रेतत्व-लक्षणस्य तात्पर्य्यस्य ज्ञानमवश्यं शाब्द-सामान्ये हेतुस्तस्य संशये व्यतिरेक-निश्चये च तदनुत्पादात्, तन्निश्चयस्यैव युगपदनेकार्थोपस्थितावेकार्थमात्रान्वये विनिगमकत्वात्, लक्षणा-कल्पकत्वात्, मुख्यार्थ-वाधस्य सर्व्वत्र लक्षणायामसम्भवात्। तथा च तात्पर्य्यावच्छेदकतयैव सर्व्वत्र वाक्यार्थ-सिद्धेः, प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं भावयन्नपि शब्दो गृहीत-ग्राहित्वेनानुवादक (छ) इति प्रभाकर-मतमप्यनादेयं। कवि-

(क) तात्पर्य्यज्ञानस्य शाब्दहेतुत्वमते सिद्धान्तमभिधाय तदहेतुत्ववादिना मते शिष्य-बुद्धि-वैशद्यार्थं सिद्धान्तमुपन्यस्यति "वस्तुत" इत्यादि "सिद्धान्त" इत्यन्तेनेति।

(ख) विशिष्य हेतुत्वस्यावश्यकत्वं चेत्यर्थः।

(ग) हेतुत्वमित्यर्थः।

(घ) तात्पर्य्यज्ञानस्याहेतुत्वादेवेत्यर्थः।

(ङ) तात्पर्य्यग्राहकत्वेनाभिलषितमित्यर्थः।

(च) प्रकरणज्ञानस्यैव हेतुत्वं चेत्यर्थः। अस्य च "अनादेय" मित्यग्रिमेणान्वयः।

(छ) अनुवादकत्वान्न प्रमाणमिति भावः।

वाक्यानां-( १ ) मन्यार्थमात्र-परत्वस्य ( क ) शुक-वाक्यानाञ्च स्वार्थ-परत्वाभावस्य निश्चयेऽपि ततः सामाजिकादेरन्वयानुभवोत्पत्त्या ( २ ) व्यभिचारादित्यास्तां विस्तरः ॥ ५ ॥

इति शब्द-प्रामाण्य-विवेचनम् ।

( १ ) काव्यानामिति हस्तलिखित-पुस्तके ।

( २ ) अन्वयबोधोत्पत्त्येति हस्तलिखित-पुस्तके ।

( क ) सत्यङ्गकाव्यानामन्यार्थमात्र-परत्वनिश्चयेपि सामाजिकान्वय-बोधस्यानुभव-सिद्धत्वा-दिति भावः ।

# अथ सार्थक-तद्विभाग-प्रकरणं ।

ननु स्वार्थान्वय-गोचरो बोधः साकाङ्क्षैरपि सार्थकैरेव शब्दैः सम्पादनीयो न तु निरर्थकैस्तत्र कोऽसौ सार्थकः कतिविधश्च ? इत्याकाङ्क्षायामाह—

> शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थ-बोधकृत् ।
> प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥ ६ ॥

यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्व-घटकस्य ( क ) वा वृत्त्युपस्थाप्य-यादृशार्थावगाहि-बोधं प्रत्यनुकूलः स तथाविधार्थे सार्थकः । पट-पाचकाद्याः प्रकृतयः सुप्-तिङाद्याः प्रत्ययाश्चादयो निपाताश्च स्वोपस्थाप्यार्थस्य ( १ ) बोधं नियमतः ( ख ) शब्दान्तरं सहकृत्य जनयन्ति, वाक्यानि पुनरसहकृत्यापि ( ग ) । शश-विषाणादिकः शब्दोऽपि शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताक-बोधने सार्थक एव, ( घ ) परन्त्वयोग्यः । स चायं त्रिविध एव ( २ ), प्रकृतिः प्रत्ययो निपातश्चेति । ( ङ ) शप्-श्यनादि-

( १ ) स्वोपस्थाप्यस्यार्थस्येति हस्तलिखित-पुस्तके ।

( २ ) एवेति नास्ति हस्तलिखित-पुस्तके ।

( क ) यौगिक-पाचकादिशब्दस्य स्व-वृत्त्युपस्थाप्यार्थाप्रसिद्धेराह "स्वघटकस्ये"ति ।

( ख ) "नियमत" इति कारिकास्थापेक्ष्यैवेत्येवकारार्थः ।

( ग ) अपिना सहकृत्येत्यस्य समुच्चयः सूचितः ।

( घ ) ननु राजपुरुषादिशब्दात् शश-विषाणादि-शब्दस्य को विशेष इति जिज्ञासा-निवृत्त्यर्थमाह "परन्त्वि"त्यादि ।

( ङ ) स्वार्थपदं सफलीकुर्व्वन् कारिकोत्तरार्द्धस्थैवकार-व्यवच्छेद्यमाह "शप्-श्यनादी" त्यादिना ।

विकरणो-नुमाद्यागमस्यान्वय-बोधने प्रकृत्यादीनां सहायोऽपि न स्वार्थोपस्थितिद्वारा (क) येन तमादाय चतुरादिविधः सार्थकः स्यात् । पुत्रीवः ( ख ) इत्यादावपि युष्मदादि-सम्बन्धो न वसाद्यादेशस्यार्थः, किन्तु तदादेशिनो युष्माकमित्यादि-वाक्यस्य, अतः पूर्व्वपदमपेच्यैव तादृशसम्बन्धबोधानुकूले तत्र न प्रसङ्गः । सदृशाद्यर्थे प्रकृत्यादिभ्यो भिन्नेषु निभ-नीकाशादि-शब्देषु अतिप्रसङ्गस्तु समासान्तर्गतत्व-नियत-स्वार्थबोधकताकान्यत्वेन विशेषणाद्वारणीयः ( ग ) ॥ ६ ॥

तत्र प्रथमोद्दिष्टां प्रकृतिं लक्षयति—

स्वेतरार्थानवच्छिन्न-यत्-स्वार्थस्याववोधने
यच्छब्द-निश्चयो हेतुः प्रकृतिः सा तदर्थिका ॥ ७ ॥

स्वेतरशब्दार्थाविशेषितस्य यादृश-स्वार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्व-संसर्गेण यादृश-शब्दवत्ताया निश्चय एव हेतु-स्तादृश-शब्दस्तथाविधार्थे प्रकृतिः । पट-भू-प्रभृतयो हि शब्दाः स्वोत्तर-विभक्त्याद्यंशे निश्चिता एव स्वोपस्थाप्यस्य वसन-जननादेरन्वयं प्रत्ययार्थे कर्म्मत्व-कर्त्तृत्वादौ बोधयन्ति न त्वन्यथा ( घ ) । प्रत्ययास्तु पदार्थान्तरानवच्छिन्नस्यापि स्वार्थस्य संख्याकालेष्टसाधनत्वादे-( १ )रन्वयबोधं प्रत्य निश्चिता अप्युपयुज्यन्ते, चैत्रः, पचति, यजेत इत्यादौ ( ङ ) शब्दान्तरधर्म्मिक--सुबादि--निश्चयस्यासत्त्वेऽपि तदर्थस्यैकत्व-वर्त्तमानत्वेष्ट-

( १ ) संख्याकालेष्टसाधनत्वादेरिति नास्ति हस्तलिखित-पुस्तके ।

( क ) एतेषां निरर्थकत्वात् स्वार्थोपस्थापकत्वं नास्तीति भावः ।

( ख ) 'ननु पुत्रीव इत्यादौ पुत्रशब्द-सहकारिणैव युष्मदादि-सम्बन्ध-बोधके वसादावति व्याप्तिरत आह—"पुत्रीव" इत्यादि ।

( ग ) निभादयः समासनिविष्टा एव स्वार्थ-बोधने समर्था न त्वन्यथेति, तथा च समासान्तर्गतत्वस्य नियता स्वार्थबोधकता यस्य शब्दस्य, तादृश-शब्दभिन्नत्वं लक्षणे विशेषणं देयं, अत्र नियतत्वं व्याप्यत्वमिति भावः ।

( घ ) "न त्वन्यथे"त्यस्य स्वोत्तरविभक्त्याद्यंशेऽनिश्चिताः सन्तो नान्वय-बोधका इत्यर्थः ।

( ङ ) अव्यवहितोत्तरत्व-संसर्गेणेति पूरणीयम् ।

साधनत्वादेश्चैव-पाक-यागादावन्वयात्। (क) स्वाव्यवहितोत्तरत्व-संसर्गेण यादृश-शब्दवत्ताया निश्चय एव तदुपस्थाप्य-यादृशार्थ-प्रकारकान्वय-बोधं प्रति हेतुस्तादृशस्यैव शब्दस्य प्रकृते तथाविधः स्वार्थः, स च पाकेत्यादेः शक्त्यादि-विरहेऽपि पचनादिरूपः सुवच एव, पचनादेः कर्म्मत्वादावन्वयं प्रत्यमादिधर्म्मिक-तादृश-शब्दवत्ताया निश्चयस्यैव हेतुत्वात्।

(ख) वहुगुड़ो द्राक्षेत्यादौ ईषदसमाप्तत्वादिरूपस्य स्वार्थस्य द्राक्षादावन्वय-बोधं प्रति गुड़ादिपद-धर्म्मिकः स्वोत्तरत्व-सम्बन्धेन वहुजादि-प्रत्ययस्य निश्चय एव हेतुरपि न पदार्थान्तरानवच्छिन्नस्य तादृश-स्वार्थस्य द्राक्षादावन्वय-बोधकः, प्रत्ययानां प्रकृत्यर्थावच्छिन्नस्यैव संख्यादिभिन्न-स्वार्थस्य (ग) धर्म्मान्तरेऽन्वयबोधकत्व-व्युत्पत्तेः, अतो नाम्नः प्राग्विहिते वहुचि न प्रसङ्गः, न वा चन्द्रनिभोयं कुम्भकारोयमित्यादौ सदृश-कर्त्राद्यर्थके निभ-कारादौ (घ), पूर्व्व-पदार्थावच्छिन्नस्यैव सदृश-कर्त्राद्यर्थस्य बोधकतायास्तत्र व्युत्पन्नत्वात्।

न चैवमेवकारादेरन्ययोगाद्यर्थे प्रकृतित्वं न स्यात्, पार्थ एव धनुर्धर इत्यादौ पार्थादि-पदार्थ-विशेषितस्यैव तादृश-स्वार्थस्यान्वय-बोधं (१)

(१) स्वार्थान्वयवोधमिति हस्तलिखितपुस्तके।

(क) ननु स्वार्थस्याववोधन इत्यत्र स्वार्थपदं यदि शक्यार्थपरं तदा गङ्गापदं तीरार्थे प्रकृतिर्न स्यात्, यदि वृत्त्युपस्थाप्यार्थ-परं तदा पाकादि-शब्दः पचनाद्यर्थे प्रकृतिर्न स्यात्, पाक इत्यस्य कृदन्तत्वेन यौगिकतया तस्य समुदायस्य वृत्तिविरहादतः स्वार्थपदं व्याचष्टे "स्वाव्यवहिते" त्यादिना।

(ख) स्वेतरार्थानवच्छिन्नत्वदल-व्यावृत्तिमाह "वहुगुड़" इत्यादिना। ईषदसमाप्तत्वमल्पन्यूनत्वं तथा च गुड़ादीषन्न्यूना द्राक्षेत्यन्वयबोध इति।

(ग) चैव इत्यादौ प्रकृत्यर्थानवच्छिन्नस्यापि एकत्वादि-स्वार्थस्य सुवादिभिश्चैवादौ बोधनात् "संख्यादि-भिन्नस्वार्थस्ये"त्युक्तम्।

(घ) "प्रसङ्ग" इति पूर्व्वेणान्वय इति भावः।

मतुपो विधानात् ( क )। शक्त्या ( ख ) निरूढ़लक्षणया च गुण-गुणिनोः स्थिति-प्रस्थानयोश्च बोधका अपि शुक्ल-स्था-प्रभृतयः प्रकृतिभ्यो न भिन्नाः, तथा शक्त्या ( ग ) समुच्चयादि-प्रतिपादका अपि चादयो न निपातेभ्यः। ( घ ) सुबादयस्तु स्व-परताया-( ङ ) मेव प्रकृतयो न त्वेकत्वाद्यर्थे।

( च ) तृतीयादौ कर्म्मत्वादेः सत्यपि ( छ ) लक्षणा न निरूढ़ा प्रायशः प्रयोग-विरहात् ( ज )।

---

( क ) अनेन प्रत्ययानामाधुनिकलक्षणयार्थबोधकत्व-निरासः सूचित इति भावः।

( ख ) प्रकृत्यन्यत्व-निवेश-प्रयोजनं दर्शयति "शक्त्ये"त्यादिना।

( ग ) निपातान्यत्व-निवेश प्रयोजनं दर्शयति "तथा शक्त्ये"त्यादिना।

( घ ) केवलप्रकृत्यन्यत्वमपहाय याट्टशार्थक-प्रकृत्यन्यत्व-निवेश-प्रयोजनं प्रकाशयति "सुबादयस्वि"त्यादिना।

( ङ ) "स्वपरतायां" स्वात्मक-वर्ण-परतायामित्यर्थः। निपातानान्तु कस्मिन्नप्यर्थे प्रत्ययत्वाभावात्तत्र याट्टशार्थकत्वं न निविष्टं प्रयोजनाभावादिति भावः।

( च ) निरूढ-लक्षणेत्यत्र निरूढपदस्य व्यावृत्तिमाह "तृतीयादा"वित्यादिना।

( छ ) दात्रेण धान्यं च्छिनत्तीत्यादौ विद्यमानापीत्यर्थः। तृतीयादि-शक्यस्य करणत्वादेर्यथाकथञ्चित्सम्बन्धस्य कर्म्मत्वादौ सत्त्वात्, शक्य-सम्बन्धरूपा लक्षणा तत्राप्यस्तीति भावः।

( ज ) "प्रायश" इत्यस्य "न निरूढा" इत्यत्र "प्रयोग विरहा"दित्यत्र चोभयत्रैवान्वयः। तथा च "न निरूढा प्रायश" इत्यस्य दात्रेण धान्यं छिनत्तीत्यादिषु बहुषु तत्तत्-स्थलेषु नानादितात्पर्य्यमूलकशाब्दबोधप्रयोजिकेत्यर्थः। तत्र हेतुमाह "प्रायशः प्रयोगविरहा"दिति, कर्म्मत्वादिबोधार्थं तृतीयादेर्बहुषु तत्तत्-स्थलेष्वप्रयुक्तत्वादित्यर्थः तथा च यो यः प्रत्ययो यत्र यत्र स्थले यद्यदर्थबोधार्थमप्रयुक्तः स प्रत्ययस्तत्र तत्रानादि-तात्पर्य्यमूलकतत्तदर्थविषयक-शाब्दबोध-प्रयोजकवृत्त्यभाववानिति नियमो बोध्यः। एवञ्च प्रत्ययानां तत्तदर्थेषु वृत्त्यङ्गीकारे तेषां तत्तदर्थेषु प्रयोग एव नियामकः, तत्र तत्र तेषां प्रयोगे च तत्तदनुशासनमेव नियमकमिति, अनुशासनगम्या च वृत्तिरनादि-तात्पर्य्यमूलकशाब्दबोधस्यैव प्रयोजिका न त्वाधुनिकतात्पर्य्यमूलक-शाब्दबोधस्य, तथा च प्रत्ययानामनादितात्पर्य्यमूलकशाब्दबोधप्रयोजकातिरिक्त-वृत्तिर्नास्तीति सूचितं, आधुनिकतात्पर्य्येण तेषामप्रयोगात्। अतएव च पशुना रुद्रं यजत इत्यादौ "सम्प्रदानं भवेत्कर्म्म, कर्म्म स्यात्करणं यज्ञे"रित्यनुशासन-बलान्निरूढ़यैव लक्षणया वृत्त्या कर्म्मत्व-बोधार्थं तृतीयायाः प्रयोगः। एतच्चानन्तरमेव व्यक्तीभविष्यतीति भावः।

अतएव ( क ) यत्रास्ति प्रयोगस्तत्र तृतीयादितोऽपि कर्म्मत्वादेः रवगमः ( ख ), यथा पशुना रुद्रं यजत इत्यादौ। अतएव ( ग ) चान्वर्थबला-( घ ) देवैक-वचनादेरेकत्वादि-बोधकत्व-प्राप्तौ "द्वेकयो-र्द्विवचनैक-वचने बहुषु बहु-वचन"मिति यत्पाणिनिः प्राह, तदिदं द्वित्वैकत्वादावेव द्वि-वचनैक-वचनादि-नियमार्थ-( ङ ) मिति फणि-भाष्य-कृतः, तेन द्वित्वादावपि नैकवचनादि-प्रयोगः प्रमाणं।

( च ) तद्धिताख्यात-कृतोऽप्येतेन व्याख्याताः। तत्रापि शक्तिव-न्निरूढ़-लक्षणाया एवं प्रत्ययत्व-सम्पादकत्वात्। न हि भक्षको दाक्षिः पक्ष्यतीत्यादौ भक्षणादेर्लक्षणया देशाद्यवगमः ( छ ) कृदादितः कस्यापि। स्वार्थिक-प्रत्ययमात्रस्य च स्वरूप-( ज ) मर्थस्तेन जुगु-प्सते, देवतेत्यादौ सन्-तलादौ नाव्याप्तिः। भाव-विहितानामपि घञादीनामुक्तैव गतिः, तत्रापि भावपदार्थस्य धात्वर्थ-स्वरूप-परत्वात्, अन्यथा (झ) पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्म्मत्वादावन्वया-नुपपत्तेः, सुबर्थे धात्वर्थान्वयस्याव्युत्पन्नत्वात्। इत्थमेव च ( ञ )

---

( क ) "प्रायश" इत्यस्य प्रयोजनमाह "अतएवे"त्यादि, प्रत्ययानां अनादितात्पर्य्यमूलक-शाब्दबोध-प्रयोजक-वृत्तौ तत्तदर्थे तेषां प्रयोगस्य नियामकत्वादेवेत्यर्थः। "यत्रास्ती"त्यनन्तरञ्च कर्म्मत्वाद्यर्थे तृतीयादेरिति पूरणीयमिति।

( ख ) अनादितात्पर्य्यमूलक-शाब्दबोधप्रयोजिकयैव लक्षणया वृत्त्येति शेषः।

( ग ) शक्ति-निरूढ़लक्षणान्यतर-वृत्त्यैव प्रत्ययानामर्थ-बोधकत्वमिति नियमस्य सर्व्वसिद्धत्वा-देवेत्यर्थः।

( घ ) एकमर्थं वक्तीत्यादि-योगबलादित्यर्थः।

( ङ ) तथा च तादृशनियमानुपगमे द्विवचनादितोऽपि कदाचिदेकत्वादि-बोध-सम्भवेन तादृश-नियमानुपपत्त्या भाष्य-कृतां विवरणग्रन्थासङ्गतिः स्यादिति भावः।

( च ) प्रत्ययानां चातुर्व्विध्यं व्यञ्जयन् तत्र लक्षणं सङ्गमयति "तद्धिते"त्यादिना

( छ ) भोजनाधिकरण-देशाद्यवगम इत्यर्थः।

( ज ) प्रकृत्यर्थ-स्वरूपमित्यर्थः।

( झ ) घञादेर्निरूढ़ार्थकत्वानङ्गीकारे इत्यर्थः।

( ञ ) घञादेः स्वरूपार्थकतायामेव चेत्यर्थः।

स्तोकः पाक इत्यादि प्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यं, अन्यथा (क) स्तोकादीनां धात्वर्थ-विशेषणत्वे नियमतो द्वितीयापत्तेः। अतएव ( ख ) "सञ्चारो रति-मन्दिरावधि सखी-कर्णावधि व्याहृत" मित्यादिकं काव्यं "आगमो ( ग ) निष्फलस्तत्र भुक्तिःस्तोकाऽपि यत्र नो" इत्यादि स्मृतिश्च सङ्गच्छत इति नव्याः।

( घ ) स्वोत्तर-प्रत्ययार्थ-साकाङ्क्षस्यैव धातोरर्थे विशेषणतापन्नस्य वोधने तदर्थकनाम्नो द्वितीयाद्यपेक्षा, न तु धातुमात्रस्य, तथा च स्तोकः पाक इत्यादिरेव प्रमाणं न तु स्तोकं पाक इत्यादिः। "अपृथग्-रूप-क्रियाया ( ङ ) विशेषणं कर्म्मे"त्याद्यनुशिष्टेरपि तत्रैव तात्पर्य्यात्। अतएव ( च ) स्तोकं स्थीयते, साधु गतं, चकितं द्रष्टव्य-मित्यादौ धात्वर्थस्य तिङाद्यर्थ-कालादि-साकाङ्क्षत्वान्न तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिक-सम्प्रदायः।

( क ) घञादिः स्वरूपार्थकत्वाभावे इत्यर्थः।

( ख ) तथा च स्तोकादीनां यदा धात्वर्थविशेषणत्वे तात्पर्य्यं तदा स्तोकं पाक इत्येव प्रमाणं, यदा तु घञर्थ-विशेषणत्वे तात्पर्य्यं तदा स्तोकः पाक इत्येव प्रमाणमिति पर्य्यवसितं। एवञ्च "अतएवे"त्यस्य तात्पर्य्यभेदेन द्विविध-प्रयोगस्य प्रामाण्यादेवेत्यर्थः। तथा च "सञ्चारो रति-मन्दिरावधी"त्यादौ रतिमन्दिरावधीत्यस्य धात्वर्थविशेषणतया तदुत्तरं द्वितीया, "आगमो निष्फल" इत्यादौ च निष्फल इत्यस्य प्रत्ययार्थ-विशेषणतया तदुत्तरं प्रथमेति भावः।

( ग ) स्वत्व-हेतुः प्रतिग्रहादिरागमः।

( घ ) प्राचीन-शाब्दिक-मतमाह "स्वोत्तरे"त्यादिना, स्वं धातुः। "तदर्थकनाम्नः" विशे-षणतापन्नार्थकनाम्नः। "न तु धातुमात्रस्ये"त्यनन्तरं अर्थे विशेषणतापन्नस्य वोधने, तदर्थकनाम्नो द्वितीयाद्यपेक्षेति पूरणीयमिति भावः "धातुमात्रस्य" स्वोत्तर-प्रत्ययार्थ-निराकाङ्क्षस्यधातोरित्यर्थः।

( ङ ) स्वोत्तरप्रत्ययार्थ-निराकाङ्क्ष-भिन्नस्य धातोरर्थरूपा या क्रियास्तस्या इत्यर्थः।

( च ) अपृथग्रूप-क्रियाविशेषणं कर्म्मेत्यनुशासनस्य स्वोत्तरप्रत्ययार्थ-साकाङ्क्ष-धात्वर्थ-विशे-षणं कर्म्मेत्यर्थे तात्पर्य्यादेवेत्यर्थः।

यत्तु वाक्यपदीये भर्त्तृहरिणोक्तं—

"यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वय-वोधने ।
यदपेचस्तयोःपूर्व्वा प्रकृतिः प्रत्ययः परः ॥"

इति वहुजादावव्याप्तरतिव्याप्ति-प्रसङ्गादुपेच्चितं (क) ।

यदपि "स्वेतरार्थानवच्छिन्न-स्वार्थस्यान्वय-वोधने ।
योऽसमर्थः सैष शब्दः प्रत्ययोऽयं चतुर्व्विधः ॥"

इत्युमापत्युक्तं तदप्ययुक्तं, सुप्-तिङोः पदार्थान्तरानवच्छिन्न-स्वार्थ-संख्यादि-प्रकारक-वोध-समर्थत्वेन तयोस्तव्यादौ चाव्याप्तेः (ख) । सैष इत्यत्र लुप्त-विभक्तिकस्यापि सस्य पादपूरणे पुनः सन्धिः "सैष दाशरथी राम" इत्यादिवत् ॥ ८ ॥

लाघवा-( ग ) दन्यथा निर्वक्ति—

इतरार्थानवच्छिन्ने स्वार्थे यो वोधनाचमः ।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते ॥ १० ॥

यः शब्दः शब्दान्तरार्थाविशेषिते यादृश-स्वार्थे धर्म्मिणि तिङर्थस्यान्वय-वोधने स्वरूपायोग्यः स वा निभादि-शब्देभ्यो भिन्नस्तादृशार्थे प्रत्यय इत्यर्थः । ( घ ) चैत्रोऽस्तीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वय-वोधकत्वं, ( ङ ) एवं यजेत स्थीयेतेत्यादौ यज्यादि-धातूनां । (च) पचतीत्यादौ तिङां, पाचकोऽस्तीत्यादौ कृतां

---

( क ) वहुच्-प्रत्यये प्रत्ययलच्चणस्याव्याप्तिरतिव्याप्तिश्च प्रकृति-लच्चणस्येति भावः ।

( ख ) गन्तव्य इत्यादौ इतरार्थाविशेषित-कृति-साध्यत्वादेस्तव्य-प्रत्ययेन वोधनादिति भावः ।

( ग ) प्रकृतिभेदस्यानिवेशेन लाघवादित्यर्थः ।

( घ ) नाम्नि लच्चणासत्त्वं ज्ञापयति "चैत्र" इत्यादिना ।

( ङ ) धातौ लच्चणासत्त्वं ज्ञापयति "एव"मित्यादिना ।

( च ) "इतरार्थानवच्छिन्न" इत्यस्य प्रयोजन-प्रदर्शन-मुखेन लच्ये लच्चण-सत्त्वं प्रकाशयति "पचती"त्यादिना ।

काश्यपिरित्यादौ च तद्धितानां प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्त्तमानत्वादेर्बोधकत्वं; न तु तदनवच्छिन्ने इति तेषु नाप्रसङ्गः। (क) निभ-निपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृश-समुच्चयादि-स्वार्थे तिङर्थस्यान्वयबोधं प्रति स्वरूपायोग्योऽपि निभादि-रेवेति न तत्र प्रसङ्गः॥ १०॥

निपातं लक्षयति—

स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयाक्षमः।
सुबाद्यन्यो निपातोऽसौ विविधश्चादि-भेदतः॥ ११॥

यः शब्दः केवले यादृश-स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वय-बोधं प्रत्यसमर्थः सुबादि-प्रत्ययेभ्यः प्रत्येकं भिन्नः (ख) स तादृशार्थे निपातः। (ग) चादयो निपाताः स्वार्थे समुच्चयादौ नामार्थस्या-भेदेनान्वय-बोधं प्रत्ययोग्याः। न हि स्मृतमनुभूतञ्चेत्यादितः कस्यापि स्मृतः समुच्चय इत्यादिरनुभवः, किन्तु स्मृतानुभूतयोः समुच्चय इत्यादिरेव।

(घ) स्तोकं पचतीत्यादौ धातुरपि स्वार्थे नामार्थस्य तादात्म्यं बोधयंस्तत्समर्थ एव, (ङ) प्रत्ययस्तु सुबादिरेव। (च) चः शब्द

(क) निभाद्यन्यत्व-निवेश-प्रयोजनं दर्शयति "निभे"त्यादिना। कारिकास्थ "निभादौ" इत्यत्रादि-पदान्निपातस्य ग्रहणमिति भावः।

(ख) सुब्भिन्नत्वे सति तिङ्-भिन्नत्वे सति कृत्-तद्धिताभ्यां भिन्न इत्यर्थः। प्रत्यय भिन्नत्वनिवेशस्तु न सम्भवति, प्रत्ययलक्षणस्य निपात-भेद-घटितत्वेनान्योन्याश्रय-प्रसङ्गादिति भावः।

(ग) लक्ष्ये लक्षणं सङ्गमयति "चादय" इत्यादिना।

(घ) धातौ लक्षणासत्त्वं दर्शयति "स्तोक"मित्यादिना।

(ङ) प्रत्यये लक्षणासत्त्वं प्रकाशयति "प्रत्ययस्त्वि"त्यादिना।

(च) चः शब्द इत्यादौ स्वात्मक-वर्ण-बोधकस्य चकारादेस्तादात्म्येन शब्दाभेद-बोधकतया तत्राव्याप्तिरित्याशङ्कामपनेतुं स्वपरतायां चकारादेरलक्ष्यत्वमाह "चः शब्द" इत्यादिना।

इत्यादौ नामार्थस्याभेद-साकाङ्क्षत्वकारादिः स्वपरतायां न निपातः, किन्तु नामैव। (क) पुरन्दर-प्रभृतौ तु नाम्नि निपात-व्यपदेशः सूत्रानिष्पाद्यत्व-प्रयुक्तो भाक्तः।

(ख) "कार्त्तिक्यादौ यन्नदानं तदत्यन्त-विनिन्दित"मित्यादौ न केवले नञर्थे यदर्थस्य तादात्म्येनान्वयः, किन्तु दानाद्यवच्छिन्ने (ग)। (घ) स्वर्दिवा नक्तमाद्यव्ययमपि नामैव न तु निपातः, शोभनं स्वरित्यादौ तदर्थे नामार्थस्य तादात्म्येनान्वयात्। प्रादयस्तूपसर्गा न सार्थकाः (ङ), सार्थकास्तेनिपाता अपि। (च) जातौ सत्ता नास्तीत्यत्र सत्तायां जाति-वृत्तित्वस्य समवेतत्व-निरूपित-स्वरूप-सम्बन्धेनात्यन्ताभावो नञा प्रत्याय्यते, न तु सत्त्वस्याभावः, प्रथमान्त-पदा-

(क) पुरन्दरप्रभृतिनाम्नां भाक्तनिपातत्व-कथनेन तेषामलक्ष्यत्व-प्रतिपादनात् तेष्वव्याप्ति-शङ्कां निरस्यति "पुरन्दर" इत्यादिना।

(ख) "केवले यादृशस्वार्थे" इत्यत्र केवल-पदस्य प्रयोजनमाह "कार्त्तिक्यादा"वित्यादिना।

(ग) नञर्थोऽभावस्तस्मिन् दानविशेषिते "यन्न दान"मिति यत्पदोपस्थाप्यस्यार्थस्यान्वयस्तथा च यदभिन्नः कार्त्तिकीवृत्तिर्दानाभाव इति शाब्दबोध एवञ्चात्र न इति निपाते नाव्याप्तिरिति भावः।

(घ) शोभनं स्व-रित्यादौ स्वरादिशब्दार्थे स्वर्गे शोभनाद्यर्थस्य तादात्म्येनान्वय-बोधस्यानुभव-सिद्धत्वेन स्वरादि-शब्देष्वव्याप्तिं तेषामलक्ष्यत्वाभिधानेन परिहरति "स्वर्दिवे"त्यादिना।

(ङ). तथा च सार्थकत्वेसतीत्यनेनापि निपातलक्षणं विशेषणीयं। एवञ्च प्रादीनां निरर्थकत्वान्न तत्र प्रसङ्गस्तेषां लक्ष्यत्वेतु शप्-श्यनादावतिव्याप्तिवारणमेव सार्थकत्व-निवेश-प्रयोजनमिति भावः।

(च) नञादि-निपातानां नामान्यत्वे जातौ सत्ता नास्तीति वाक्यात् सत्त्वाभावो जाति-निरूपिताधेयतावानित्यन्वय-बोधो न स्यान्नञः प्रथमान्तत्वाभावेन तदर्थे तिङर्थाश्रयत्व-बोधस्यासम्भवादिति नञादेर्नामत्वमवश्यमङ्गीकर्त्तव्यं तथा च "केवले" इत्यस्य नञादावव्याप्ति-वारण-प्रयोजनकत्वमसम्भवीत्याशङ्का-निरासार्थमाह "जातौ"वित्यादि।

नुपस्थाप्यत्वेन नञर्थे तत्रा-(क)स्तित्वादि-क्रियान्वयस्यायोगात्। (ख) जातौ जातौ न स्त इत्यत्र जाति-द्वयत्वावच्छिन्नाभावस्यैकत्वेन तत्र तिङर्थ-द्वित्वस्य पर्य्याप्ति-बाधेनान्वयासम्भवाच्च। सत्ता (ग) समवायेन जातौ नास्तीत्यादौ तु समवेतत्वीय-स्वरूप-सम्बन्धावच्छिन्न प्रतियोगिताकत्वे समवाय-शब्दस्य लक्षणा, परेषा-(घ) मपि सत्ताभावस्य समवायावच्छिन्नत्वासम्भवेन समवायावच्छिन्न-प्रतियोगिताकत्वे तल्लक्षणाया आवश्यकत्वात्। प्रथमार्थ-प्रतियोगित्वे समवायावच्छिन्नत्वस्य तत्रान्वय (ङ) इति तु साहसं (च), प्रथमायाः प्रतियोगितार्थकत्वस्य क्वचिदप्यकल्पनात्। विशिष्टसत्ता (छ) गुणे नास्तीत्यादिकस्तु प्रयोगो यदि (ज) प्रमाणं, तदाधेयत्वस्याव्याप्य-वृत्तित्वेन द्रव्य-वृत्तित्वावच्छेदेन तस्यां गुण-वृत्तित्वाभाव-सत्वाद् (१) विशिष्टस्या-(झ)तिरिक्तत्वादित्यपि कश्चित्।

---

(१) सम्भवादिति क्वचित् पाठः।

---

(क) सत्त्वाभावे इत्यर्थः।

(ख) सत्ता-विशेष्यक-बोधानङ्गीकारे दोषं प्रदर्शयति "जातौ"वित्यादिना।

(ग) ननु समवायेन जातौ सत्ता नास्तीत्यादौ समवाय-सम्बन्धावच्छिन्नजाति-वृत्तित्वस्याप्रसिद्ध्या भवदुक्त-बोधानुपपत्तिरस्मन्मते च समवायावच्छिन्न-सत्ताभावे जाति-वृत्तित्वावगाहनेन न काचिदनुपपत्तिरित्यत आह "सत्ते"त्यादि।

(घ) नञो नामत्ववादिनामित्यर्थः।

(ङ) तथा च नञो नामत्ववादिमते जातौ सत्ता नास्तीत्यत्र सत्तापदोत्तर प्रथमायाः प्रतियोगित्वमर्थस्तत्र समवायावच्छिन्नत्वस्यान्वय-स्वीकारेण विनापि लक्षणामुपपत्तिः सम्भवतीति भावः।

(च) सहसोक्तं साहसं। विनाऽवधानमुक्तमिति तदर्थः।

(छ) सत्ता-विशिष्टसत्तयोरेकत्वेन विशिष्टसत्ताया गुणवृत्तितया तत्र तदभावासत्वात् गुणे विशिष्ट-सत्तानास्तीति प्रतीतेर्भवदुक्तरीत्या प्रामाण्यं दुर्घटमित्यत आह "विशिष्टसत्ते"त्यादि।

(ज) विशिष्टसत्ता न गुणवृत्तिरिति प्रत्ययवत् गुणे विशिष्टसत्ता नास्तीति प्रत्ययस्यापि स्वमते प्रामाण्यं नास्तीति "यदी"त्यनेन सूचितम्।

(झ) वासुदेव-सार्व्वभौम-मतमाह "विशिष्टस्ये"त्यादिना।

न क्रोधो न च मात्सर्य्यं न लोभो नाशुभा मतिः।
भवन्ति कृत-पुण्यानां भक्तानां पुरुषोत्तमे ॥

इत्यादावनेक-नञामानर्थक्य-प्रसङ्गस्तु (क)—

"न तं विरिञ्चि र्न भवो न श्रीर्नापि धनाधिपः।
दातुमर्हन्ति विभवं विष्णोराराधनेन यः ॥"

इत्यादाविव प्रकारान्तर—वादिनामपि समानः (ख), समान-समाधानश्च (ग)। पदात् परस्य युष्मदादे-स्ते-प्रभृत्यादेश-विधौ च पद-शब्दः साकाङ्क्ष-निपातस्याप्युलक्षकस्तेन "न ते धनं धर्म्म्य" मित्यादौ न तस्यानुपपत्तिः। सदृशाद्यर्थे निभादेर्निपातत्व-व्युदासस्तु प्रागुक्त-दिशावमेयः (घ)। स चायं निपातः तु, नञ्, पुनः, इव, एव, मास्मादि-भेदाद्बहुविधः ॥ ११ ॥

इति सार्थक-तद्विभाग-प्रकरणं।

(क) नञो नामत्वानङ्गीकारे "न क्रोध" इत्यादौ एकेनैव नञा क्रोधादौ भवन-कर्त्तृत्वा-भाव-बोधस्य सम्भवादनेक-नञामानर्थक्यमिति, नामत्वे तु तस्य क्रोधादीनां प्रत्येकाभाव-बोधक-तया सार्थक्यमिति नञर्थ-विशेष्यक एवान्वय-बोधः स्वीकर्त्तव्य इति भावः। "प्रसङ्गस्त्वि"-त्यस्याग्रिमाभ्यां "समानः" "समान-समाधानश्चे"ताभ्यामन्वयः।

(ख) विरिञ्च्यादयो विभव-दान-योग्यत्वाभाववन्त इत्येवमेवान्वय-बोधः स्वीकार्य्यः, न तु तेषां प्रत्येकाभावे विभव-दान-योग्यत्वान्वय-बोधः, तत्प्रत्येकाभावे विभव-दान-योग्यत्वस्याभावात्, तथा च नञो नामत्व-वादिनां मते यथा "न तं विरिञ्चि"रित्यादौ अनेक-नञामानर्थक्यं, तथा नञो निपातत्व, वादिनामपि "न क्रोध" इत्यादावनेक-नञामानर्थक्यमिति भावः।

(ग) ननु विशेष्य-बोधक-पद-भेदात् तत्समभिव्याहृत-विभक्ति-भेदवत् एकाभाव-बोधक-नञादि-भेदस्यापि सम्प्रदाय-सिद्धत्वमेवान्यथा द्वन्द्व-निर्द्देशेनैवोपपत्तेः प्रत्येक-निर्द्देशस्य वैयर्थ्यं स्यादिति चेन्ममापि तदेवोत्तरमित्याह "समान-समाधानश्चे"ति।

(घ) तथा च निपात-लक्षणे निभाद्यन्यत्वं निवेश्यमिति भावः।

# अथ वाक्य-तद्विभाग-प्रकरणं ।

ननु यदि प्रकृतिः प्रत्ययो निपातो वा स्वार्थोपस्थिति-द्वाराऽन्वय-बोधं कुर्य्यात्, प्रत्येकमात्रं, (क) निराकाङ्क्ष-शब्द-सहकृतं वा किन्न कुर्य्यात्, मिलितानामेव तेषां तथात्वन्तु (ख) सर्व्वत्रासम्भवीत्यत (ग) आह—

वाक्य-भावमवाप्तस्य सार्थकस्यावबोधतः ।
सम्पद्यते शाब्द-बोधो न तन्मात्रस्य बोधतः ॥ १२ ॥

सार्थकस्य प्रकृत्यादेर्वाक्यतामापन्नस्यैव स्वार्थोपस्थिति-द्वारान्वय-बोधकत्वं, न तु प्रत्येकस्य निराकाङ्क्ष-सहितस्य वा ॥ १२ ॥

॥ १३ ॥ वाक्यं यदि शब्द-समूहस्तदा मिथो-निराकाङ्क्षस्यापि तस्यान्वय-बोधकत्वापत्तिरतो वाक्यं लक्षयति ।

मिथः साकाङ्क्ष-शब्दस्य व्यूहो वाक्यं चतुर्व्विधं ।
सुप्तिङन्त-चयो नैवमतिव्याप्त्यादि-दोषतः ॥

यादृश-शब्दानां यादृशा-(घ)र्थ-विषयताकान्वय-बोधं (१) प्रत्यनुकूला परस्परमाकाङ्क्षा तादृश-शब्द-स्तोम एव तथाविधार्थे वाक्यं । तच्च

(१) विषयताकं बोधमिति हस्तलिखित-पुस्तके पाठः ।

(क) शब्दान्तरं सहकृत्यैव सार्थकः शाब्द-जनक इति प्रागुक्तं एवञ्च "प्रत्येकमात्र"मित्यसङ्गतमित्यत आह "निराकाङ्क्षे"ति ।

(ख) आकाङ्क्षारूप-मिलन-विशिष्टानामेव प्रकृति-प्रत्यय-निपातानां जनकत्वन्त्वित्यर्थः ।

(ग) सर्व्वत्र वाक्ये निपातस्यासत्त्वेन विविधानामाकाङ्क्षाया मिलनात्मिकाया असम्भवादिति भावः ।

(घ) यादृश इति विषयता-विशेषणं न त्वर्थ-विशेषणं, अर्थ-विशेषणत्वे ऽयोग्य-वाक्यासंग्रहापत्तेः । तथाविधार्थेति स्वरूप-कथनमात्रं न तु लक्षण-घटकतया तन्निवेश इति "वह्निना सेक" इत्याद्ययोग्य-वाक्योऽपि संगृह्यते इति भावः ।

चतुर्व्विधं, चतस्रश्च विधा वक्ष्यन्ते (क), वह्निना सेक इत्याद्यपि वाक्य-मेव, परन्तु वाधितार्थकत्वादयोग्यं (ख)। शाब्द-मते-(ग) राहार्य्य-त्वोपगमे (घ) निर्वह्निर्वह्निमान् पचन्न पचतीत्यादिकमपि वाक्यमेव, (ङ) नो चेदपार्थकमेव, याहृश (च) वोधत्वावच्छेदेनाहार्य्यत्वं (छ) ताहृश-वुद्धयर्थं प्रयुक्त-पदानामेव तथाविधार्थ-वोधं प्रत्यपार्थकत्वात्। (ज) यत्तु सुप्-तिङन्त-चयो वाक्यमित्यमर-सिंहैरुक्तं, तन्न युक्तं, सुवन्तादेः प्रत्येक-समुदाय-विकल्पेना-(झ) तिव्याप्त्यव्याप्त्योः प्रस-

(क) केवल-सुवन्त, केवल-तिङन्त, सुवन्तैक-पद-घटित-तिङन्त, अनेक-सुप्-तिङन्त-घटित-भेदाद्वाक्यं चतुर्व्विधं, केवल-सुवन्तं यथा घटमिति, केवल-तिङन्तं यथा पचतीति, सुवन्तैक-पद-घटित-तिङन्तं यथा चैत्रः पचतीति, अनेक-सुप्-तिङन्त-घटितं यथा चैत्रो ग्रामं गच्छति, योऽयं शूद्रस्यान्नं पचति सोऽतिनिन्दितो भवेदित्यादि तथा चोक्तं—

"सुवन्तञ्च तिङन्तञ्च सुवन्तैकसमन्वितं।
सुप्-तिङन्त-द्वयोपेतं वाक्यमुक्तं चतुर्व्विधं" इति।

(ख) तथा च वस्तुतोऽयोग्येनापि वाक्येन योग्यता-भ्रम-दशायां शाब्द-वोधो भवतीति भावः।

(ग) ननु वह्निना सेक इत्यादेरिव निर्वह्निर्वह्निमानित्यादेरप्ययोग्यत्वाविशेषात् तेनापि योग्यता-भ्रमात् शाब्द-वोधो भवत्वित्याशङ्कायामाह "शाब्दमते"त्यादि।

(घ) आहार्य्यञ्च स्व-विरोधि-पदार्थ-विशेषिते स्व-प्रकारक-ज्ञानं, स्व-विरोधि-पदार्थाव-च्छिन्न-विशेष्यता-निरूपित-स्व-प्रकारता-निरूपक-ज्ञानमिति यावत्, तच्चेच्छा-प्रयोज्यमेव। प्रत्यक्षा-न्यानुभवस्याहार्य्यत्वे विवादादाह "उपगम" इति। तथा च तस्याहार्य्यत्वाङ्गीकारमते निर्वह्निर्वह्नि-मानित्यादि-वाक्यादपि योग्यता-भ्रमात् शाब्द-वोधो भवतीति तत्रापि वाक्यत्वमिष्टमेवेति भावः।

(ङ) ताहृश-वाक्यात् शाब्दानङ्गीकारमतेप्याह "नोचे"दित्यादि।

(च) अपार्थकत्वं किमित्याकाङ्क्षायामाह "याहृशे"त्यादि।

(छ) यद्धर्म्मावच्छिन्न-विशेष्यक-यद्धर्म्मावच्छिन्न-यत्संसर्गावच्छिन्न-प्रकारक-वोधत्व-व्यापकमाहा-र्य्यत्वमित्यर्थः।

(ज) अमर-सिंहोक्तं वाक्य-लक्षणं दूषयन् कारिकोत्तरार्द्धं व्याकरोति "यत्त्वि"त्यादिना। "चयः" समूहः।

(झ) किं सुवन्त-चयो वाक्यं? किं वा तिङन्त-चयस्तथा? इति प्रत्येक-विकल्पः, समुदाय-विकल्पस्तु किं सुवन्त-तिङन्त-चयो वाक्यमिति।

ज्ञात्, न हि ( क ) घटं पटमित्याकारः, ( ख ) पचति गच्छतीत्यानुपूर्व्वीको वा शब्द-समूहो वाक्यं, न वा ( ग ) घटः (१) पचतीत्येतयोः प्रत्येकं न वाक्यं, क्रिया-रहितं न वाक्यमस्तीत्यादिकस्तु प्राचां प्रवादो ( घ ) निर्युक्तिकत्वादश्रद्धेयः ( ङ ) ॥ १३ ॥

## इति वाक्य-तद्विभाग-प्रकरणं ।

---

( १ ) घटमिति हस्तलिखितपुस्तके पाठः ।

( क ) सुबन्त-चयस्य वाक्यत्वेऽतिप्रसङ्गमाह "न हि घटं पट"मित्यादि । घटं-पटमिति समुदाये अतिव्याप्तिरिति भावः ।

( ख ) तिङन्त-चयस्य वाक्यत्वेऽतिव्याप्तिमाह "पचति गच्छती"त्यादि, पचति-गच्छतीति समुदायेऽतिव्याप्तिरिति भावः ।

( ग ) सुबन्त-तिङन्त-समुदायस्य वाक्यत्वे अव्याप्तिमाह "न वे"त्यादि, घट इत्यस्य पचतीत्यस्य चैकेकस्य सुबन्त-तिङन्त-चयत्वाभावादव्याप्तिरिति भावः । कारिकास्थातिव्याप्त्यादिरित्यादि-पदेनाव्याप्तिर्लाभः, अतएव विवरणे "अतिव्याप्त्यव्याप्त्योः प्रसङ्गा"दित्युक्तं ।

( घ ) "प्राचां" वेयाकरणानां । "प्रवादः" अनिश्चित-पुरुष-परम्परागत-वाक्य-विशेषः ।

( ङ ) "निर्युक्तिकत्वादश्रद्धेय" इत्यस्य प्रामाण्यावधारक-युक्ति-विरहादनवधृत-प्रामाण्यक इत्यर्थः ।

# अथ प्रकृति-विभाग-प्रकरणं ।

प्रकृतिं विभजते ।

निरुक्ता प्रकृतिर्द्वेधा, नाम-धातु-प्रभेदतः ।
यत्प्रातिपदिकं प्रोक्तं, तन्नाम्नो नातिरिच्यते ॥ १४ ॥

निरुक्ता, न तु सांख्यानामिव जगदुपादान-भूता (क), यच्च पाणिनि-प्रभृतिभिः "प्रातिपदिकं प्रकृति"रित्युक्तं, तदपि नाम्नो नातिरिच्यते, नातो विभाग-न्यूनता ॥ १४ ॥

## इति प्रकृति-विभाग-प्रकरणं ।

(क) महर्षि-कपिल-प्रणीतं दर्शनं सांख्यदर्शनमित्युच्यते । तन्मते साम्यावस्थोपलक्षित-सत्त्वरजस्तमोगुणात्मिका प्रकृतिः, सैव महदादि-जगद्रूपेण परिणमते, अतः प्रकृतेः परिणामि-कारणत्व-रूपमुपादानत्वं । एतन्मते नासदुत्पद्यते न च सद्विनश्यति, सतामभिव्यक्ति-तिरोभावा वुत्पत्ति-विनाशावित्युच्यते, प्रत्यक्षानुमान-शब्द-भेदात्प्रमाणं त्रिविधं, आत्मा कूटस्थ-नित्यश्चिद्रूपोऽनेकश्च न त्वद्वैत-वेदान्तिनामिवैकः । पदार्थाः पञ्च-विंशति-संख्याताः, प्रकृतिर्महत्तत्वं अहङ्कार-स्तन्मात्रपञ्चकमेकादशेन्द्रियं महाभूतानि पञ्च आत्मा चेति, एतच्च निरीश्वर-सांख्य-मते । सेश्वर-सांख्य-मते तु एते: पञ्च-विंशति-पदार्थाः साईमीश्वर इति: षड-विंशति-संख्यकाः पदार्था इति । सेश्वर-सांख्य-दर्शनन्तु पातञ्जल-दर्शनं योग-दर्शनमिति चोच्यते, तच्च पतञ्जलि-प्रणीतमिति, अन्य-त्सर्व्वं तत एवावगन्तव्यं, विस्तर-भयादुपरम्यते ।

# अथ नाम-तद्विभाग-प्रकरणं ।

तत्र प्रथमोद्दिष्टं नाम लक्षयति—

येन ( क ) स्वीय-यदर्थस्य मुख्यत: प्रतिपादने ।
स्वोत्तर-प्रथमापेक्ष्या तन्नाम स्यात्तदर्थकम् ॥ १५ ॥

यादृश-शब्देन स्वोपस्थाप्य-यदर्थ-मुख्य-विशेष्यका-(ख)न्वय-वोधार्थं स्वोत्तर-प्रथमा विभक्तिरपेक्ष्यते, तादृश: शब्द एव तदर्थकं नाम। घटादयो हि शब्दा: प्रथमान्तत्वेन निश्चिता एव स्वार्थ-मुख्य-विशेष्यकं वोधमुत्पादयन्ति, न त्वन्यथा (ग), न हि घट इत्यादित इव घटादित्यादितोऽपि घटादिमुख्यक: सुबर्थ-संख्यादेरवगम: । ( घ ) पीत पटेत्यादिक: समासोऽपि स्वोत्तरं प्रथमा-प्रतिसन्धान-दशायामेव पटादि-मुख्य-धर्म्मिकस्य पीताद्यन्वय-वोधस्य जनक:, अतएव ( ङ )

( क ) येनेति कर्त्तरि तृतीया, अस्य चापेक्ष्येत्यग्रिमेणान्वय: ।

( ख ) मुख्य-विशेष्यत्वञ्च एतद्ग्रन्थकृन्मते प्रकारतानात्मक-विशेष्यत्वं, गदा-धरमते तु प्रकारत्वानवच्छिन्न विशेष्यत्वमिति । जगदीश-मतेऽन्तराभासमान-प्रकारत्व-विशेष्यत्वयोरभेद:, गदा-धर-मते तु तयोरवच्छेद्यावच्छेदकभाव इति सिद्धान्तादिति भाव: ।

( ग ) विवरणे "निश्चिता एवे"त्येवकारव्यवच्छेद्यमाह "नत्वन्यथे"ति न तु प्रथमान्तत्वेनानिश्चिता अन्वय-वोधमुत्पादयन्तीति तदर्थ: । तथा च तन्नामार्थ-मुख्य-विशेष्यकान्वय-वोधं प्रति-प्रथमान्तत्वेन तन्नाम्नो निश्चयो नियामक इति भाव: ।

( घ ) ननु पीत-पटेत्यादि-समासस्य प्रथमान्तत्वेनानिश्चितस्यापि पटादि-मुख्य-विशेष्यकान्वय-वोध-जनकत्वात् "प्रथमान्तत्वेन निश्चिता एवे"त्यवधारणासङ्गतिरित्याशङ्कामपनेतुमाह "पीत-पटेत्यादी"ति ।

( ङ ) तदप्रतिसन्धान-दशायामन्वय-वोधस्याजननादेवेत्यर्थ: ।

"नापदं (क) प्रयुञ्जीतेति" वृद्धाः (ख), पदं विभक्त्यन्तं। (ग) पीत-पटरूपमित्यादावपि नावान्तर-वाक्यार्थ-बोध-पूर्व्वको महावाक्यार्थ-बोधः, पटादिनाम्नः प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वय-धियः पूर्व्व-मसम्भवात्। (घ) विशिष्ट-वैशिष्ट्यावगाहितायाः प्रमाणान्तरेण (ङ) पटादि-धर्म्मिक-पीत-निश्चयादपि तत्र सम्भवात्। न चान्योन्य-पर-स्परादि-नामस्वव्याप्तिः, एभ्यः प्रथमा नाभिधीयत इति वृद्ध-स्मरणा-दिति वाच्यं। मल्लाभ्यामन्योन्यं हन्यत इत्यादौ मल्लयोः परस्पर-कर्त्तृक-हनन-कर्म्मत्वान्वयानुरोधेन तेषामपि प्रथमान्तत्वात् (च)। अन्यथा (छ) सकर्म्मकस्य हन्तेर्भावाख्यात-साकाङ्क्षत्वानुपपत्ते-(१) रकर्म्मकस्यैव (२) धातोस्तथात्वात् (ज)॥ १५॥

(१) साकाङ्क्षत्वापत्तेरिति हस्तलिखित-पुस्तके। (२) एवेति नास्ति हस्तलिखित-पुस्तके।

(क) अपदमित्यतः पूर्व्वं समासादिकमिति पूरणीयं। अतएव चादेर्निर्विभक्तिकस्यापि प्रयोगः। वस्तुतो वैयाकरणमते चादेर्विभक्त्यन्तता-स्वीकारेण यथा-श्रुतमेव सम्यगिति भावः।

(ख) वैयाकरणा इत्यर्थः।

(ग) वाक्य-घटित वाक्यं महावाक्यं, तद्घटक-वाक्यत्ववान्तरवाक्यमित्युच्यते। पीत-पट-रूप-मिति महावाक्यं पीतपटेति-वाक्य-घटितत्वात्, पीतपटेति चावान्तरवाक्यमुक्तमहावाक्य-घटकत्वा-दिति। महावाक्यार्थ-बोधं प्रति अवान्तर-वाक्यार्थ-बोधः कारणं, तथा च पीतपटरूपमित्यत्र पीत पटेत्यवान्तरवाक्यस्याप्रथमान्तत्वेन ततः शाब्दबोधासम्भवान्महावाक्यार्थबोधानुपपत्तिरित्याशङ्कामपने-तुमवान्तवाक्यार्थ-शाब्दबोधस्य महावाक्यार्थबोध-हेतुतां खण्डयति "पीतपटरूप"मित्यादिना।

(घ) ननु विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदक-प्रकारक-निश्चयत्वेन हेतुत्वादवान्तर-वाक्यार्थ-बोधरूप-विशेषणतावच्छेदक-प्रकारक-निश्चयस्य प्रागावश्यकत्वमत आह "विशिष्टे"त्यादि।

(ङ) प्रत्यक्षादिनेत्यर्थः।

(च) तथा च प्रथमान्तपदोपस्थाप्य एवार्थे धात्वर्थ-विशेषिताख्यातार्थस्यान्वय-स्वीकार इति भावः।

(छ) नन्वत्राख्यातस्य भावविहितत्वेन मल्ल-द्वय-कर्त्तृक-परस्पर-कर्म्मकं हननमिति धात्वर्थ-विशेष्यक-बोधाङ्गीकारेणान्योन्यादिशब्दस्य प्रथमान्तत्वाभावेऽपि न क्षतिरित्यत आह "अन्यथे"-त्यादि। "अन्यथा" प्रथमान्तत्वानङ्गीकारे इत्यर्थः।

(ज) अकर्म्मकस्यैव धातोर्भावाख्यात-साकाङ्क्षत्वेन सकर्म्मस्य हन्तेस्तदनुपपत्तौ प्रथमा-रहित-तादृश-पदेन सकर्म्मक-हन्तेराकाङ्क्षा-विरहात्तादृश-वाक्यात् शाब्द-बोधो न स्यादिति भावः।

निरूक्तं नाम विभजते—

रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकं।
तच्चतुर्धा-(क)-ऽपरे रूढ-यौगिकं मन्यतेऽधिकं (ख) ॥ १६ ॥

तन्नाम (ग), च-त्रयमवधारणार्थं (घ), तेन किञ्चिन्नाम क्वचिदर्थे रूढमेव यथा गो-प्रभृतौ गवादि "गमे-(ङ) र्डो दाभाभ्यां नु-र्धेट इच्चेत्यादेरौणादिकस्य प्रत्ययस्य शक्ति-विरहेण यौगिकत्वायोगात् (च)। किञ्चि-(छ) ल्लक्षकमेव यथा तीरादौ गङ्गादि, (ज) आद्य-

(क) भिद्यते इति शेषः।

(ख) अपरेः पण्डितै रूढ-यौगिकमप्यधिकं नाम स्वीक्रियते इत्यपरेरित्याद्यधिकमित्यन्तस्यार्थः।

(ग) "तच्चतुर्धा" इत्यत्र तत्पदस्यार्थमाह "तन्नामे"ति।

(घ) एव-शब्दस्यावधारणार्थकतायाः प्रसिद्धत्वेन तस्य तादृशार्थकत्वमनुक्त्वैव चकारस्यार्थमाह "च-त्रय"मित्यादिना। कारिकायामेवकारस्य योगरूढमित्यनेन, तृतीय-चकारस्य-यौगिकमित्यनेन सम्बन्धः। मिथो-विरुद्धधर्म्माणामेव विभाजकत्वे पङ्कजादि-शब्देषु रूढत्व-यौगिकत्वयोरेकत्र समावेशेन मिथो-विरुद्धत्वाभावात् तेन विभागोऽनुपपन्न इति शङ्का च-त्रयस्यावधारणार्थकत्वकथनेन निराकृता, तथा च पङ्कजादि-शब्दे केवल-रूढत्वं केवल-यौगिकत्वं वा नास्तीत्यभिप्रायः।

(ङ) गो, दानु, भानु, धेन्वादि-शब्दानां पाकादि-शब्दवत् यौगिकत्वं भवत्वित्याशङ्कां निरस्यति "गमेर्डो"रित्यादिना। गम-धातूत्तरं डो-प्रत्ययो भवति, दा-भा-धातूत्तरञ्चनुर्भवति, धेट्-धातूत्तरञ्च नुरिडागमश्च भवतीत्यर्थः।

(च) पाक इत्यादौ भाव-विहित-प्रत्ययानां शक्तिरङ्गीक्रियते, तद्ग्राहक-व्याकरण-कोषादेः सत्त्वात्, गो-दान्वित्यादौ च औणादिक-प्रत्ययानां सा नाङ्गीक्रियते तद्ग्राहकस्याभावात्, औणादिक प्रत्ययानां पद-साधुतामात्र-प्रयोजनत्वस्याङ्गीकृतत्वात्तथा च गवादि-शब्दानामवयव-वृत्तेरभावेन तेषां यौगिकत्वासम्भव इति भावः।

(छ) "किञ्चित्" नाम इत्यर्थः।

(ज) ननु गङ्गायां स्नानं कुरु इति वाक्यात्प्रयोज्य-वृद्ध-व्यवहारं दृष्ट्वा निकटस्थ-बालको यथा गङ्गा शब्दस्य जले शक्तिं गृह्णाति, तथा गङ्गायां व्रज इति वाक्यात्प्रयोज्य-वृद्ध-व्यवहारात्त्ते बालकस्तीरेऽपि तत्पदस्य शक्तिमवधारयितुं शक्नोतीति तथा च गङ्गापदं तीरार्थेऽपि रूढं स्यादित्याशङ्कामपनेतुमाह "आद्यव्युत्पत्त्ये"त्यादि। "आद्यव्युत्पत्त्या" प्रथमं वृद्ध-व्यवहार-दर्शनेन।

व्युत्पत्त्या पूरवत्तीरे शक्ति-ग्रहस्याविशिष्टत्वेऽप्याजानिक--प्रयोगापत्त्या तदप्रामाण्य-कल्पनात् (क), शक्तेः पूर्व्वपूर्व्व-प्रयोग-नियतत्वात्। किञ्चिद्योगरूढ़मेव, यथा पङ्क-जाते पद्मादौ पङ्कजादि। किञ्चिद् यौगिकमेव यथा पाक-कर्त्रादौ पाचकादि। (ख) रूढ़यौगिकमप्यधिकं नाम, यथा मण्डप-महारजतादि, तद्धि कदाचिदवयव-वृत्त्या योगार्थमेव (ग) कदाचिच्च समुदाय-शक्त्या-रूढ्यर्थ-(घ) मेवाभिधत्ते इत्यपरेषाम् मतम् (ङ)। गोर्वाहिक इत्यादौ तु शक्यार्थ-सदृशत्वावच्छिन्न-बोधकतया गौणं गवादि-पदं गो-सदृशादौ लक्षकमेव न तु ततो भिद्यते ॥ १६ ॥

• रूढ़ं नाम लक्षयति विभजते च—

रूढ़ं सङ्केतवन्नाम सैव संज्ञेति कीर्त्त्यते।
नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा ॥ १७ ॥

---

"पूरवत्" इति सप्तम्यन्ताद्वतिः, तथा च "पूरे" जल इवेत्यर्थः। "शक्ति-ग्रहस्याविशिष्टत्वेपि" यथा वृद्ध-व्यवहारेण जले शक्ति-ग्रहस्तथा तेनैव तीरेऽपि तद्ग्रह इत्युभयत्र तद्ग्रहस्याविशेषेऽपीत्यर्थः। भ्रमप्रमा-साधारण-शक्ति-ग्रहस्य शाब्द-हेतुत्वेन भ्रमत्व-प्रमात्वाभ्यां विशेषस्य शाब्द-बोधानुपयोगित्वात् तादृश-विशेषो नादृतः। तयोर्ग्रहस्योपयोगेऽपि प्रथमं तयोर्ग्राहकाभावादिति भावः।

(क) गङ्गायां व्रज इति प्रयोजक-वृद्ध-वचनात्प्रयोज्य-वृद्धस्य तीर-गमनं दृष्ट्वा प्रथमतो-निकटस्थ-बालकस्तीरे गङ्गा-पदस्य शक्तिं गृह्णाति, पश्चाच्च गङ्गा-पदं यदि तीर-शक्तं स्यात्तदा सृष्टि-कालत्व-व्यापक-तीरानुभावकताकं स्यादिति तर्क-मूलक-व्यतिरेकानुमानेन तीराशक्तत्वानुमित्या वृद्ध-व्यवहार-दर्शन-मूलक-तीर-शक्तत्व-ज्ञाने अप्रामाण्यमवधारयति। तथा च तीर-शक्तत्व-ज्ञानस्याप्रमात्व-ग्रह-दशायां न तादृश-शक्ति-ज्ञानस्य शाब्द-बोध-जनकता, अप्रामाण्यग्रहाभाव-विशिष्ट-शक्ति-निश्चयस्यैव तज्जनकत्वादिति भावः।

(ख) अपरेरित्यादि-कारिकांशं व्याकुरुते "रूढ़यौगिक"मित्यादिना।

(ग) मण्डपानकर्त्तृ-वृहद्रजतादिकमेवेत्यर्थः।

(घ) गृह-काञ्चनादिकमित्यर्थः।

(ङ) अपरेषां मतमित्यनेनास्वरसः सूचितः, स च तुल्य-युक्त्या रूढ़लक्षकत्वमप्यधिकं नाम-विभाजकं स्यात् इत्याद्यापत्ति-रूपः, अस्मन्मते च मण्डपादि-पदं गृहादि-बोधने रूढ़ं, मण्डपान-कर्त्त-बोधने च यौगिकमिति।

यन्नाम याद्दृशार्थे सङ्केतितमेव, न तु यौगिकमपि (क) तद्रूढं। योगरूढन्तु पङ्कजादिकं न तथा (ख), रूढ़-नामैव च संज्ञा-पदेनाभिलप्यते, न तु रूढ़ादिवत् संज्ञाऽपि नाम्नोऽवान्तर-भेदः, येन विभाग-व्याघातः स्यात्। संज्ञायाश्च त्रयो भेदाः, नैमित्तिकी पारिभाषिकी औपाधिकी चेति, पाचक-पाठकादयस्तु न संज्ञाः, सङ्केत शून्यत्वादिति वक्ष्यते (ग) ॥ १७ ॥

(घ) ये तु रूढ़स्य नाम्नश्चतुर्व्विधत्वमाहुस्तन्मतमुपन्यस्यति—

जाति-द्रव्य-गुण-स्पन्दैर्धर्म्मैः सङ्केतवत्तया।
जाति-शब्दादि-(ङ) भेदेन, चातुर्व्विध्यं परे (च) जगुः ॥ १८ ॥

गो-गवयादीनां गोत्वादि-जात्या पश्वाद्यादीनां लाङ्गुल-धनादि-द्रव्येन धन्य-पिशुनादीनां पुण्य-द्वेषादि-गुणेन चल-चपलादीनाञ्च शब्दानां कर्म्मणावच्छिन्न-शक्तिमत्त्वात् (छ) चातुर्व्विध्यमेव रूढ़ानामिति, यदुक्तं (ज) दण्ड्याचार्य्यैः—

"शब्दैरेव प्रतीयन्ते (झ) जाति-द्रव्य-गुण-क्रियाः।
चातुर्व्विध्यादमीषा-(ञ)न्तु, शब्द उक्तश्चतुर्व्विधः" इति

(क) "यौगिकमपि" अवयव-वृत्तिमदपीत्यर्थः।

(ख) "न तथा" नावयव-वृत्तिमद्भिन्नमित्यर्थः।

(ग) "वक्ष्यते" इत्यस्य कृदन्त-नाम-विचारे इति शेषः, तथा च पाचकादीनां रूढ़-नामत्व-वादो निराकृत इति भावः।

(घ) शाब्दिक-मतस्यावतारणिकामाह "ये त्वि"त्यादिना।

(ङ) अत्र शब्द-पदस्य वाच्य इत्यर्थः, तथा च "जाति" जाति-रूपः पदार्थः "शब्दो" वाच्यो यस्येति बहुव्रीहिणा "जातिशब्दे"ति पदस्य जाति-वाचक-शब्द इत्यर्थ-लाभ इति।

(च) "परे" शाब्दिका इत्यर्थः।

(छ) "अवच्छिन्न-शक्तिमत्त्वा"दित्यनेन पूर्व्वोक्त-तृतीयान्त-चतुष्टयस्यान्वयः।

(ज) शाब्दिक-मत-दार्ढ्यार्थं ततः प्राचीनानां दण्ड्याचार्य्याणां तत्र सम्मतिमाह "यदुक्त"मित्यादिना।

(झ) प्रकार-विधयेति शेषः।

(ञ) "अमीषां" जात्यादीनामित्यर्थः।

(क) तदेतज्जड़-मूक-मूर्खादीनामन्य-शून्यादीनाञ्च (ख) शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः ॥ १८ ॥

नैमित्तिक-संज्ञां लक्षयति—

जात्यवच्छिन्न-सङ्केतवती नैमित्तिकी मता ।
जातिमात्रे हि सङ्केताद्व्यक्तेर्भानं सुदुष्करम् ॥ १९ ॥

यन्नाम जात्यवच्छिन्न-सङ्केतवत् सा नैमित्तिकी संज्ञा, यथा गो-चैत्रादिः, सा हि गोत्व-चैत्रत्वादि-(ग) जात्यवच्छिन्नमेव गवादिकमभिधत्ते, न तु (घ) गोत्वादि-जातिमात्रं (ङ)। गो-पदं गोत्वे सङ्केतितमित्याकारक-ग्रहाद् गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुभवानुपपत्तेः। एक-शक्तत्व-ग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात् (च)।

ननु (छ) गामानयेत्यादौ गोत्वादि-कर्मताकत्वेनैवानयनादेरन्वय-धीर्गोत्वादि-शक्तत्वेन पद-ज्ञानस्य गोत्वाद्यन्वय-बुद्धिं प्रत्येव हेतु-

---

(क) "परे" इत्यनेन सूचितमस्वरसमाह "तदेत"दित्यादिना। "तत्" दण्ड्याचार्य-सम्मतमित्यर्थः। "एतत्" शाब्दिक-मतमित्यर्थः।

(ख) जड़-पदं चेष्टा-रहिते, मूक-पदं वाग्रहिते, मूर्ख-पदं विद्या-रहिते शक्तमित्येतेषामभाव-विशिष्ट-बोधकत्वाज्जात्यादि-शब्देनासंग्रहः। ननु जड़ादि-पदं न केवल-चेष्टादि-रहिते शक्तं, घटादेरपि तद्वाच्यत्व-प्रसङ्गात्, किन्तु चेष्टादि-रहित-प्राण्यादावेव, तथा च तेषां पश्वादि-शब्दवत्प्राण्यादि-द्रव्य-बोधकत्वेन द्रव्य-शब्दान्तर्गतत्वमित्यत आह "अन्य-शून्यादीनाञ्चे"ति अन्य-पदं भेदवति शून्य-पदञ्चात्यन्ताभाववति शक्तमिति तयोरभाव-विशिष्ट-वाचकत्वमिति भावः। आदि-पदेन सामान्य-विशेषादि-शब्द-परिग्रहः।

(ग) परिमाण-भेदेन बाल्य-यौवनादि-शरीराणां विभिन्नतया शरीर-वृत्ति-चैत्रत्वादीनामनेक-समवेतत्वात् जातित्वमिति भावः।

(घ) कारिकापरार्द्धं व्याकुर्वन् मीमांसकाभिमतं जाति-शक्ति-वादं दूषयितुमारभते "नत्वि"त्यादिना।

(ङ) "जातिमात्र"मित्यस्य [illegible] इति [illegible]।

(च) गो-पदात् घटादि-बोधापत्तेरिति भावः।

(छ) भट्ट-मतं दूषयितुमुपक्रमते "नन्वि"त्यादिना [illegible]

[ पृष्ठा ३८, पंक्ति ५। ]

त्वात्, सुवर्थ—कर्म्मत्वादौ स्वाश्रय-वृत्तित्व-सम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात्। गवादि-कर्म्मताकत्वेन वोधस्तूत्तर-काल-माक्षेपात् (क)। कर्म्मत्वं गो-वृत्ति गोत्व-निष्ठ-कर्म्मतात्वात्, (ख) आनयनं गो-वृत्ति-कर्म्मताकं गोत्व-वृत्ति-कर्म्मताकत्वादित्या-द्यनुमान-साम्राज्यात् (ग)। न च वस्तु-गत्या यद्गोत्व-शक्तत्वं तज्ज्ञानस्य हेतुत्वे (घ) गो-पदं जाति-शक्तमित्येवं गो-पद-ज्ञानादपि शुद्ध-गोत्वस्यान्वय-वोधापत्तिः, गोत्वत्वाद्यवच्छिन्न-शक्तत्व-प्रकारक-ज्ञानत्वेन तथात्वे च (ङ) लाघवात् (च) गोत्वावच्छिन्न-शक्तत्व-प्रकारक-ज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादिति वाच्यं। गो-पदं गोत्व-शक्तमित्याकारक ज्ञानत्वेनैव हेतुतायां शुद्धस्यैव गोत्वस्य विषयिता-सम्बन्धेन शक्त्यंशे (छ) विशेषणत्वेन गोत्वत्वादि-प्रवेश-गौरवस्याऽसम्भवात्, न हि समवायान्य-सम्बन्धेन जातिः प्रकारतायां धर्म्मावच्छिन्नत्व-नियमो (ज) मानाभावात्। अयं गौरित्यादि-(झ) व्यवसा-

---

(क) "आक्षेपात्" अनुमानादित्यर्थः। अनुमान-प्रकारमाह "कर्म्मत्वं गो-वृत्ती"त्यादिना।

(ख) ननूक्तानुमानात् कर्म्मत्वादौ गो-वृत्तित्व-सिद्धावपि तादृश-कर्म्मता-निरूपकत्वस्याऽऽनयनादावसिद्ध्या नाभिलषित-वोध-निर्व्वाह इत्यतोऽनुमानान्तरमाह "आनयन"मित्यादिना।

(ग) साम्राज्या"दित्यस्य प्राचुर्य्यादित्यर्थः।

(घ) "हेतुत्वे" इत्यतः पूर्व्वं स्वोत्तर-निरवच्छिन्न-गोत्वान्वय-वोधं प्रतीति पूरणीयं।

(ङ) निरुक्त-वोधं प्रति हेतुत्वे चेत्यर्थः।

(च) गवेतरावृत्तित्वे सति सकल-गोवृत्तित्वरूप-गुरु-शरीर-गोत्वत्वाद्यप्रवेशेन लाघवा-दित्यर्थः।

(छ) ईश्वरानङ्गीकर्त्तृमीमांसक-मते शक्तिरतिरिक्त-पदार्थ-रूपाऽपि विषयता-निरूपिकैवेति न विशय-विषयि-भावासङ्गतिः। न्याय-मते त्वीश्वरेच्छादि-रूपत्वेन विषय-विषयि-भावे विरोधो नास्त्येवेति भावः।

(ज) नियमाभावे हेतुमाह "मानाभावा"दिति।

[illegible] "अयं गौरित्यादी"त्यादिना। गोत्व-[illegible] स्वरूपतो गोत्व-प्रकारकत्वाभावात् "अयं [illegible] त्वर्थः," अस्य चानुमाने इत्यचानुव्यवसायि

योत्तरमिमं गोत्वेन जानामीत्याकारके तस्य ज्ञातता-लिङ्गकानुमाने-ऽनुव्यवसाये वा व्यभिचाराच्च। (क) प्रागनुपस्थित्या गोत्वत्वादि-स्तत्रोपनयस्यायोगात्। एतेन (ख) जाति निरवच्छिन्न-प्रकारत्वस्य समवाय-संसर्गावच्छिन्नत्व-नियमात्, केवलस्य गोत्वादेः प्रकारांशे विषयतया (ग) सुबर्थ-कर्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तं, उक्त-स्थल (घ) एव व्यभिचारात्। न चैवं (ङ) कालो गौः, पटं गौरित्यादि-प्रत्ययोऽपि प्रमा स्यात् कालिकादि-सम्बन्धेन गोत्वादिमति कालिकादि-सम्बन्धेन तत्प्रकारत्वादिति वाच्यं कालिकादि-सम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यवच्छिन्न-प्रका-

---

इत्यत्र चोभयत्रान्वयो बोध्यः। "अनुमाने" इति भट्ट-मताभिप्रायेण, तन्मतावलम्बिभिर्ज्ञान-साध-कानुव्यवसायाऽनङ्गीकारात्। तन्मते ज्ञानेन विषये कश्चिद्धर्म-विशेष उत्पद्यते स च प्रकटता वा ज्ञातता वेत्युच्यते, प्रकटताख्य-लिङ्गेन च तत्कारणीभूतस्य ज्ञानस्यानुमितिर्जायते, तया चानुमित्या ज्ञानं तत्प्रामाण्यं प्रमाता च विषयी क्रियते, अनुमानाकारश्च अहं गो-विशेष्यक-गोत्व-प्रकारक-ज्ञानवान् गो-वृत्ति-गोत्व-प्रकारक-ज्ञाततावत्त्वादित्यादि-रीत्या तत्तत्-स्थले स्वयमूहनीयः, आत्मनो ज्ञातत्ववत्त्वञ्च घटो मया ज्ञात इत्यनुभव-सिद्धेन मदीयत्व-नियामक-स्वरूप-सम्बन्धेन। गुरुमते ज्ञानस्येव भट्टमते ज्ञाततायाः स्वप्रकाशत्वाभ्युपगमान्नातीन्द्रियादि-विषयेष्वनुमित्यादि-जनित-ज्ञात-तायास्तन्निष्ठ-व्याप्त्यादेश्च ग्रहस्यानुपपत्तिः। ज्ञातेतर-ज्ञानस्यैव भट्टैः स्वप्रकाशत्वानभ्युपगमेनैकत्र ज्ञानत्व-ज्ञाततात्वयोः सत्त्वेऽपि न क्षतिः। अन्यत्सर्व्वं प्रामाण्यवादीय-रहस्य-टीकातोऽवगन्तव्यं। "अनुव्यवसाये" इति नैयायिक-मताभिप्रायेण। तन्मतेऽनुव्यवसायस्याङ्गीकृतत्वात्। "व्यभि-चाराच्चे"त्यस्य पूर्व्वोक्त-"न नियम" इत्यनेनान्वयः।

(क) ननु पूर्व्वोक्तानुमित्यादौ गोत्वत्वेनैव गोत्वादेर्भानमिति न व्यभिचार इत्यत आह "प्रागनुपस्थित्ये"त्यादि।

(ख) "एतेन" "उक्तस्थल एव व्यभिचारा"दिति वक्ष्यमाण-दोषेणेत्यर्थः। अस्य च "प्रत्युक्त" मित्यग्रिमेणान्वयः।

(ग) "विषयतये"त्यस्य "प्रकारत्वायोग" इत्यनेनान्वयः।

(घ) पूर्व्वोक्तानुमानानुव्यवसाय-स्थले इत्यर्थः।

(ङ) "एवं" समवायान्य-सम्बन्धेन निरवच्छिन्न-जाति-प्रकारक-ज्ञानाङ्गीकारे इत्यर्थः।

रता-गर्भत्वेन तादृश-मतेः प्रमात्वायोगात् (क)। अन्यथा (ख) घटत्वादि-जातेः संस्थान-समवेतत्व-मते (ग) संयोगो घट इत्यादि-प्रतीतेः समवायेन प्रमात्वस्य दुर्व्वारतापत्तेः (घ)। शाब्दस्येव (ङ) प्रत्यक्षस्यापि कालो गौरित्यादि-बोधस्य नियमतो गवाद्यभेदाव-गाहित्वेनैवाप्रमात्व-सम्भवाच्चेति (च) भट्ट-मतानुवर्त्तिनः। तन्मन्दं विनाप्याक्षेपं गामानयेत्यादितो गवादि-कर्म्मताकत्वेनानयनादेरन्वय-बोधस्यानुभविकत्वात्। (छ) गौ-र्गच्छतीत्यादौ शुद्ध-गोत्वे गति-मत्वाद्यन्वयस्यानुभवेनास्पर्शनात्, (ज) गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात्, (झ) स्वाश्रय-वृत्तित्व-सम्बन्धेन गति-

---

(क) तथा च कालो गोत्ववानित्येव तत्र प्रमाणमिति भावः।

(ख) तत्सम्बन्धेन तद्वति तत्सम्बन्धेन तत्प्रकारक-ज्ञानत्वमात्रस्य प्रामाण्य-पदार्थत्वे इत्यर्थः।

(ग) आरम्भक-संयोगमात्र-समवेतत्व-मते इत्यर्थः।

(घ) संस्थान-समवेतत्व-वादि-मते समवायेन घटत्व-त्वविशेषित-घटत्व-प्रकारक-घटत्ववा-निति-प्रतीतेरेव प्रामाण्यं, स्वाश्रयारम्भत्व-सम्बन्धेन च अविशेषित-घटत्व-प्रकारक-घट इति-प्रतीते-रिति, तथा च विशेषतः प्रकारत्वादिकमुपादाय तत्तत्सम्बन्धेन तत्तत्प्रकारक-प्रमात्वं तत्तत्-स्थले निर्व्वाच्यमिति भावः।

(ङ) विशिष्टबुद्धेर्भ्रम-प्रमान्यतरत्व-नियमात् कालो गौरित्यादि-विशिष्ट-प्रतीतेः प्रमान्य-त्वस्येव तदभाववति तदप्रकारकतया भ्रमभिन्नत्वस्यापि सम्भवेन प्रमाभ्रम-भिन्नायास्तादृश-विशिष्ट-प्रतीतेरलीकत्वापत्तिरित्यत आह "शाब्दस्येवे"त्यादि। कालो गौरित्यत्राभेदावगाहि-शाब्दबोधे तत्रस्य नाम्नोः समान-विभक्तिकत्वस्य सत्त्वेन शाब्दबोधस्याभेदावगाहित्वे निर्व्विवाद-सम्भवात् "शाब्दस्येवे"ति दृष्टान्ततयाभिहितमिति भावः।

(च) तथा चास्याः प्रतीतेर्गो-भिन्ने अभेद-सम्बन्धेन गवावगाहित्वेनाप्रामाण्यमिति भावः।

(छ) अनुभवे विप्रतिपन्नं प्रत्याह "गौर्गच्छती"त्यादि। "अस्पर्शनात्" अविषयी करणादित्यर्थः। निर्धर्म्मितावच्छेदकक-शाब्दबोधानभ्युपगमादिति भावः।

(ज) ननु गोत्वत्वादि-धर्म्मितावच्छेदकक एव तत्र बोधो भविष्यति तथा च नोक्त दोष इत्यत आह "गोत्वत्वाद्यनुपस्थित्ये"त्यादि।

(झ) ननु गौर्गतिमान् स्वाश्रय-वृत्तित्व-सम्बन्धेन गतिमत्त्वादित्यनुमानेन गवि गतिमत्त्व-बोधो भविष्यतीत्यत आह "स्वाश्रयवृत्तित्वे"त्यादि। समवायेन गत्यभाववति गोत्वे स्वाश्रय-वृत्तित्व-सम्बन्धेन हेतोरवस्थानाद्व्यभिचार इति भावः। "आक्षेपस्य" अनुमानस्येत्यर्थः।

मत्त्वादि-हेतुना गवादौ-साध्यात्मसम्बन्धेन गतिमत्वाद्याक्षेपस्य व्यभिचारादि-दोषेण दुःशक्यत्वाच्च। एतेन (क) कर्म्मत्वादौ गोत्वादेः स्वाश्रय-वृत्तित्व-सम्बन्धेनान्वय-वोधोत्तरं कर्म्मत्वस्य गो-वृत्तित्वं विना गोत्व-वृत्तित्वमनुपपन्नमित्यनुपपत्ति-धी-सहकृतेन गामित्यादि-वाक्येनैव कर्म्मत्वं गवीयमित्यौपादानिको (ख) गवादि-व्यक्ति-वोध इति श्रीकर-मतमप्यनादेयं, (ग) मिथो, विरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्यामवच्छिन्न-वोधस्यालोकत्वेन शब्दानुपपत्तिभ्यां सम्भूय (घ) तथाविधौपादानिक-वोधस्य जननायोगाच्च। (ङ) यत्तु गौर्ज्ञायते गौर्नश्यति सर्व्वत्र गोत्वादि-जाति-शक्तैव गवादि-पदेन लक्षणया गोत्वादि-विशिष्टा व्यक्तिर्वोध्यते, व्यक्तीनां वहुत्वेनान्य-लभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि (च) लक्षणायां वीजत्वात् यदाहुर्मण्डनाचार्य्याः—

"जातेरस्तित्व-नास्तित्वे (छ) न हि कश्चिद्विवक्षति।
नित्यत्वाल्लक्षणीयाया (ज) व्यक्तेस्ते हि विशेषणे" ॥ इति

---

(क) प्रसङ्गादौपादानिक-वोध-वादि-श्रीकर-सम्मतमपि जाति-शक्ति-वादं दूषयति "एतेने"त्यादिना, "एतेन" विनाप्यर्थापत्तिं गामित्यादि-वाक्यात् कर्म्मत्वादौ गोरन्वय-वोधानुभवेनेत्यर्थः "स्वाश्रये"त्यादौ स्व-पदं गोत्वादि-परं।

(ख) अनुपपत्ति-सहकृत-शब्द-जन्य-शाब्द-वोध एव श्रीकरैरौपादानिक-वोध इत्युच्यते।

(ग) अनुभवे विप्रतिपन्नं प्रत्याह "मिथ" इत्यादि। शाब्दत्वार्थापत्तित्वयोरेकत्र समावेशे, साङ्कर्य्येण तयोर्जातित्वं न स्यादिति भावः।

(घ) "सम्भूय" मिलित्वेत्यर्थः।

(ङ) मण्डनाचार्य्य-सम्मतं जाति-शक्ति-वादं दूषयितुमुपन्यस्यति "यत्त्वित्यादिना"।

(च) ननु गां पश्यतीत्यादौ मुख्यार्थ-वाध-विरहात् कथं तत्र लक्षणेत्यत आह "तात्पर्य्यानुपपत्तेरपी"ति। तथा च मुख्यार्थ-वाधवत्तात्पर्य्यानुपपत्तिरपि लक्षणायां वीजं, अन्यथा यष्टीः प्रवेशयेत्यादौ लक्षणाभाव-प्रसङ्गात्।

(छ) उत्पाद-विनाशौ इत्यर्थः।

(ज) लक्षणा-वोध्याया इत्यर्थः।

तदपि तुच्छं, व्यक्तिं विनाकृतायां गोत्वादि-जातौ गवादि-पदस्य मुख्य-प्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात्, ( क ) शक्य-सम्बन्धस्यैव लक्षणात्वात्। न च गोरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे ( ख ) वा स्वावच्छेद्यत्व-सम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविध-स्थल एव जातौ मुख्य-प्रयोग, ( ग ) तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्व-निष्ठ-गोत्वावच्छेद्यत्व-संसर्गेण प्रकृत्यर्थस्य गवादेरन्वय-बोधकत्वात्, अन्यथा (घ) गो-गोत्वयोर्भक्ति-(ङ) शक्तिभ्यां गो-पदेन बोधने वृत्ति-द्वयस्य यौगपद्यापत्तेः। ( च ) वस्तुतस्तु शुद्धस्य गोत्वादेः शाब्द-धी-प्रकारतायाः समवायावच्छिन्नत्व-नियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादि-सम्बन्धेनान्वयो दुर्घट एव, ( छ ) द्रव्यं ( ज ) घट इत्यादि-प्रतीतेः समवायेन प्रमत्वानुरोधात् घटत्वादि-( झ ) जातेर्नानात्वोपगमादिति।

---

( क ) "मुख्यप्रयोगाभावेन" मुख्य-विशेष्यक-बोधौपयिक-प्रयोगाभावेनेत्यर्थः। "तन्मात्रस्य" गोत्वमात्रस्येत्यर्थः। ननु शक्याप्रसिद्धावपि लक्षणा-सम्भव इत्याशङ्कायामाह "शक्ये"त्यादि।

( ख ) उक्तस्थले अवधित्वस्य प्रतियोगित्व-रूपत्वात्तदेवाह "प्रतियोगित्वे" इति।

( ग ) शङ्कां निरस्यति "तत्रे"ति। गोरन्यो महिष इत्यादावित्यर्थः।

( घ ) गोत्वादेरपि तत्रान्वये बाधकाभाव इत्यत आह"न्यथे"ति, उभयान्वय-स्वीकारे इत्यर्थः।

( ङ ) "भक्ति"र्लक्षणेत्यर्थः।

( च ) गङ्गायां घोष-मत्स्यौ स्त इत्यत्र तात्पर्य्य-सत्त्वेन युगपद्वृत्तिद्वयस्यावश्यमङ्गीकार्य्यत्वादाह "वस्तुतस्त्वि"त्यादि।

( छ ) ननु शुद्ध-जातेः प्रकारत्वस्य समवायावच्छिन्नत्वे किं मानमित्यत आह "द्रव्यं" इति।

( ज ) ननु क्षितित्व-द्रव्यत्वादिकं जातिरेव न घृतादौ गगनादौ च तस्याप्रत्यक्षत्वादित्यत आह "घट" इति, "प्रमात्वानुरोधा"दिति तथा च तत्र समवायावच्छिन्न-प्रकारत्वानुपगमे समवायेन द्रव्यत्वादिमति द्रव्यत्वादि-प्रकारकत्वरूप-प्रमात्वमेव तादृश-प्रतीतेर्न स्यादिति भावः।

( झ ) साङ्कर्य्य-भियाह "घटत्वादी"त्यादि।

(क) प्राभाकरास्तु गोत्व-शक्तत्वेन ज्ञातं पदं ताद्रूप्येण गो-शाब्द-त्वावच्छिन्नं प्रत्येव हेतुरतो गोत्व-शक्ति-ग्रहान्न गोत्वेन (ख) गवयादेः न वा द्रव्यत्वादिना गोरन्वय-धियोऽतिप्रसङ्गः। न चैवं (ग) जातेरिव व्यक्तेरपि शक्यत्वमावश्यकं, न हि (घ) गवादि-पदस्य शक्यत्वं जन्यत्वमपि तु तज्जन्य-(ङ) शाब्द-धी-विषयत्वं, तच्च गोत्वस्येव गोरप्यविशिष्टमिति वाच्यं गवादि-पद-धर्म्मिक-स्व-(च) शक्तता-ज्ञानत्वावच्छिन्न-शाब्द-धी-जनकतावच्छेदकत्वेन (छ) गोत्वादि-जातेरेव गवादि-पद-शक्यत्वात्, गोत्व-शक्तत्वापेक्षया गो-शक्तत्वस्य गुरुतया (ज) तज्ज्ञानत्वस्य गो-शाब्दं प्रति जनकतानवच्छेदकत्वात्। (झ) अत

---

(क) प्राभाकर-मतं दूषयितुमुपन्यस्यति "प्राभाकरास्त्वि"त्यादिना "प्राहु"रित्यन्तेन पृ: ४५ प: ८। एतन्मते प्रमितिः प्रमाता प्रमेयञ्चेति तयो ज्ञानस्य विषया एवं स्वस्य प्रमात्वमपि स्वेनैव गृह्यत इति। "ताद्रूप्येण" गोत्व-रूपेणेत्यर्थः।

(ख) कार्य्यतावच्छेदके गो-प्रवेशस्य फलमाह "न गोत्वेने"त्यादिना, "ताद्रूप्येणे"त्यस्य फलमाह "न वे"त्यादिना।

(ग) अत्र शङ्कते "नचैव"मित्यादिना। "एवं" उक्तरूपेण कार्य्य-कारण-भावाङ्गीकारे इत्यर्थः।

(घ) आवश्यकत्वे हेतुमाह "नही"त्यादिना।

(ङ) "तज्जन्ये"त्यस्य पूर्व्वोक्त-गवादिपद-जन्येत्यर्थः।

(च) "स्वं"शक्यत्वेनाभिमतं गोत्वादिकं।

(छ) शक्यांशे विषयता-सम्बन्धावच्छिन्न-जनकतावच्छेदकतावच्छेदकत्वेनेत्यर्थः। एवञ्च यत्-पद-धर्म्मिक-यत्-शक्तता-ज्ञानत्वं शाब्दबोध-जनकतावच्छेदकं तत् तत्पदशक्यमिति पर्य्यवसितमिति भावः।

(ज) अनन्त-व्यक्ति-घटितत्वेन गुरुत्वमिति, तथा च गवादेस्तादृश-जनकतानवच्छेदकत्वादशक्यत्वमिति भावः।

(झ) "अतएव" तत्तत्पद-शक्यत्वस्य तत्तत्पद-धर्म्मिक-स्व-शक्तता-ज्ञानत्वावच्छिन्न-शाब्द-बोध-जनकतावच्छेदकतावच्छेदकत्व-रूपत्वादेवेत्यर्थः। "आत्म-स्वात्मत्वाद्यवगाहित्वेऽपी"त्यत्र प्रथमात्म-पदं जीवात्म-परं, स्व-पदं शाब्द-बोध-परं, द्वितीयात्म-पदञ्च स्वरूपार्थकं। तथा चान्वय-बुद्धेर्जीवात्म-शाब्द-बोधादि-विषयकत्वेऽपि जनकतावच्छेदक-गर्भे जीवात्मनः शाब्द-बोधस्य वा गौरवेणा-

एवान्वय-बुद्धेरात्म-स्वात्मत्वाद्यवगाहित्वेऽपि न तेषां पद-शक्यत्वम्। (क) अस्तु वा गोत्वादि-शक्तत्वेन ज्ञातं पदं गोत्वादि-शाब्दत्वावच्छिन्नं प्रत्येव हेतुः, (ख) विशेष्यतया तादृश-शाब्दं प्रति समवायेन गोत्वस्य नियामकत्व-कल्पनाच्च नातिप्रसङ्गः। (ग) गोत्वादिना गवादेरिव गवादे-र्गोत्वादिनान्वय-बोधत्वावच्छिन्नं प्रत्यपि विनिगमकाभावेन गोत्वादि-शक्ति-ज्ञानत्वेन हेतुत्व-मपेक्ष्य गोत्व-शाब्दत्वावच्छिन्नं प्रत्येव गोत्वस्य तच्छक्तत्व-ज्ञानस्य च द्वयोः कारणतायामेव लाघवात्। (घ) वस्तुतस्तु गोत्व-शाब्दं प्रति गोत्व-शक्ति-ज्ञानमेव हेतुर्न तु गोत्वमपि, (ङ) जाति-व्यक्त्योस्तुल्य-वित्ति-वेद्यत्व-

---

निविष्टतया न तेषां जीवात्मादीनां तत्तत्पद-शक्यत्वमिति भावः। "तेषां" आत्म-शब्दादीनामित्यर्थः।

(क) गो-धर्म्मिक-गोत्व-प्रकारक-शाब्दत्वस्य जन्यतावच्छेदकत्वे प्रकारत्व-विशेष्यत्वयोर्मिथो-विशेष्यविशेषण-भावे विनिगमना-विरहेण गुरुतर-कार्य्य-कारण-भाव-द्वयापत्तिरतो लाघवमभिप्रेत्याह "अस्तुवे"त्यादि। अस्मिन् कल्पे "वस्तुतस्ति"त्यग्रिम-कल्पे च गवादेर्न शक्ति-ज्ञान-जन्यतावच्छेदक-विषयिता-विशेष-निरूपकत्वमिति भावः।

(ख) "हेतुः" विषयिता-सम्बन्धेन हेतुतावच्छेदकमित्यर्थः, तथा च ज्ञायमान-पदस्याहेतुत्वेऽपि न दोषः। "नियामकत्व-कल्पनात्" हेतुत्व-कल्पनादित्यर्थः। "नातिप्रसङ्गः" गोत्वेन गवयादि-बोधस्य नापत्तिरित्यर्थः।

(ग) प्रकारत्व-विशेष्यत्वयोर्विशेष्य-विशेषण-भावे विनिगमना-विरहेण पूर्व्व-कल्पापेक्षयाऽस्मिन् कल्पे लाघवमाह "गोत्वादी"त्यादिना "लाघवा"दित्यन्तेन।

(घ) मीमांसकमते भ्रमस्यासत्त्वात् गोत्वेन गवयादि-बोधस्यालीकत्वेन तदापत्तेरसम्भवात् गोत्वस्याहेतुत्वेऽपि न क्षतिरित्याह "वस्तुतस्ति"त्यादि-"न तु गोत्वमपी"त्यन्तेन। "गोत्व-शक्ति-ज्ञानं" गो-पदं गोत्वे शक्तमित्याद्याकारकं ज्ञानमित्यर्थः। "न तु गोत्वमपी"त्यस्य पूर्व्वोक्त-"हेतु"-रित्यनेनान्वयः।

(ङ) ननु गोत्व-शक्ति-ग्रहस्य गोत्व-शाब्दं प्रति हेतुत्वे गो-व्यक्तीनां तादृश बोधे भानं न स्यादित्यत आह "जाति-व्यक्त्यो"रित्यादि। अत्र तुल्य-पदं एकार्थकं, वित्ति-पदं ज्ञानार्थकं, तथा च जाति-व्यक्त्योरेक-ज्ञान-वेद्यत्व-नियमादित्यर्थः। एवञ्च व्यक्ति-विषयकत्वं विनानुपपद्यमानमेव जाति-प्रकारकत्वं तत्तत्-शाब्दे व्यक्ति-विषयकत्व-ज्ञापकमिति तथा च जाति-प्रकारत्वं व्यक्ति-विषयता-निरूपितमेवेति-नियम इति भावः।

नियमादेव गो-व्यक्तीनां तद्विषयत्वसिद्धेः, ( क ) प्रमाण-विरहादेव-गोत्वादिना गवयादि-विषयकत्वस्य तत्रासिद्धेश्च । ( ख ) यद्यपि जाते-र्विषयत्वं तत्समवायि-व्यक्ति-विषयता-निरूपितमिति न व्याप्ति-( ग ) र्गोत्वाद्यालोचने ( घ ) कालो गोत्ववानित्यादि-बोधे च व्यभिचारात् । नापि जातेर्निरवच्छिन्न-प्रकारतायास्तथात्व-नियमः ( ङ ) गौरय-मित्यादि-ज्ञानस्य प्रत्यक्षे गोत्वेनेमं जानामीत्याकारके तथात्वा-( च ) त्तथाप्यन्वय-बोधस्य निरवच्छिन्न-गोत्वादि-प्रकारत्वं गवादि-विशेष्यता-निरूपितमेवेति व्याप्तिस्तादृश-विशेष्यताकत्वं विना शुद्धस्य गोत्वादे-रन्वय-बोधेनास्पर्शनात्, ( छ ) गुरूणां गोत्वेन गवयादि-बोधस्या-

---

( क ) ननु गोत्वस्याहेतुत्वे गोत्वेन गवयादि-बोधापत्ति-रूपातिप्रसङ्ग इत्यत आह "प्रमाण-विरहा"द्रिति । मीमांसकैरन्यथाख्यात्यनङ्गीकारात् तन्मते गोत्व-शाब्दे गवयादि-विशेष्यकत्वस्य प्रत्यक्षादि-प्रमाणेन सिद्ध्यसम्भवादिति भावः ।

( ख ) अत्र तुल्य-वित्ति-वेद्यत्व-नियमः कीदृश इति शङ्कते "यद्यपी"त्यादिना ।

( ग ) "न व्याप्तिः" न नियम इत्यर्थः । तथा च जाति-विषयत्वं समवायि-व्यक्ति-विषयता-निरूपितमेवेति न नियम इति भावः ।

( घ ) "आलोचने" निर्विकल्पके इत्यर्थः । निर्विकल्पकीय-गोत्वादि-विषयतायां कस्या-श्चिदपि विषयताया अनिरूपितत्वादिति भावः । व्याप्तौ जाति-विषयतायां संसर्गावच्छिन्नत्वं-निवेश्य निर्विकल्पकान्तर्भावेण व्यभिचारस्य वारणे त्वाह "कालो गोत्ववानि"त्यादि ।

( ङ ) "तथात्वनियमः" समवायि-विषयता-निरूपितत्व-नियम इत्यर्थः । तथा च निर्वि-कल्पकीय-विषयतायाः प्रकारतानात्मकतया कालिक-सम्बन्धावच्छिन्न-गोत्व-प्रकारतायाश्च किञ्चि-द्धर्मावच्छिन्नतया न व्यभिचार इति भावः ।

( च ) गोत्वेनेमं जानामीत्याकारके गौरयमिति-ज्ञानस्यानुव्यवसाये व्यभिचारात् इत्यर्थः । तत्र प्रकारत्वांशे गोत्वस्य स्वरूपतः प्रकारतया तत्र समवायि-विषयता-निरूपितत्वाभावेन व्यभिचार इति भावः ।

( छ ) गोत्वेन गवय-बोधीय-निरवच्छिन्न-प्रकारतायां एतादृश-नियम-व्यभिचारं तादृश-बोध-स्यालीकत्वेन निराकरोति "गुरूणा"मित्यादिना । प्रभाकरगुरूणां मीमांसकविशेषाणामित्यर्थः ।

लीकत्वात्। अतएव ( क ) गवाद्यंशे गोत्वादि-प्रकारको बोधः समवायेनैव सम्बन्धान्तरेणापि तत्प्रकारकः स्याद् गोत्व-शक्ति-ज्ञानस्य तदीय-सम्बन्ध-भानं प्रत्युदासीनत्वादित्यपि प्रत्युक्तं शाब्द-मतेः शुद्ध-गोत्व-प्रकारतायां गो-विशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्ति-बलेन (ख) सिद्धावपि तस्याः सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाण-विरहेणा-( ग ) सिद्धेः, एवञ्च ( घ ) गोत्वादि-शक्तिज्ञानत्वेन जनकतायां विषयतयावच्छेदकत्वाद् ( ङ ) गोत्वादिरेव गवादि-पदस्यार्थः, गवादौ तद्व्यवहारस्तु तादृशावच्छेदक-धर्मवत्त्व-प्रयुक्तो गौणः। न चैवं ( च ) गम्यादि-धातोरपि गत्यादौ शक्तिर्नस्याद् गतित्वादि-जाति-शक्ति-ज्ञानादेव तादूप्येण ( छ ) गत्यादेर्गम्यादि-धातुतो बोध-सम्भवादिति वाच्यं गुरूणां गतित्वादे संस्थानाव्यङ्ग्यत्वेन जातित्वा-सम्भवात् (ज)। उत्तर-(झ) संयोगाद्यवच्छिन्न-क्रियात्वाद्युपाधि-रूपे च तत्र स्वरूपतः शक्ति-ग्रहायोगात्, सखण्डस्य निरवच्छिन्न-प्रकार-

---

( क ) गोत्वेन गवयादिबोधस्येव समवायान्यसम्बन्धेन शुद्धगोत्वशाब्दबोधस्यालीकत्वादेवेत्यर्थः। इदञ्चाग्रिमेण "प्रत्युक्त"मित्यनेनान्वितं। "प्रत्युक्तं" निरस्तमित्यर्थः।

( ख ) अन्वय-बोधीय-निरवच्छिन्न-जाति-प्रकारता समवाय-सम्बन्धावच्छिन्नैवेति व्याप्ति-बलेनेत्यर्थः।

( ग ) सम्बन्धान्तरावच्छिन्नत्व-साधक-प्रमाणाभावेनेत्यर्थः।

( घ ) उपसंहरति "एवञ्चे"ति, उक्त-कार्य्यकारण-भावस्य निर्द्दोषत्वे चेत्यर्थः।

( ङ ) शक्यंशे विषयतयावच्छेदकत्वादित्यर्थः। "तद्व्यवहारः" शक्यत्व-व्यवहार इत्यर्थः। "तादृशावच्छेदकः" शक्यंशे विषयतयावच्छेदक इत्यर्थः।

( च ) "एवं" जातेरेव शक्यत्वे इत्यर्थः।

( छ ) "तादूप्येण" गतित्वादि-प्रकारेणेत्यर्थः।

( ज ) संस्थानमाकृति-विशेषः। गुरुमते जातिमात्रस्यैव संस्थान-व्यङ्ग्यत्वं, तथा च गुणेषु संस्थानाभावात्तत्र तद्व्यङ्ग्या जातिर्नास्तीति भावः।

( झ ) गतित्वादेर्जातित्वाभावेऽप्यखण्डोपाधित्वेन स्वरूपतः प्रकारत्वमस्तु इत्यतो गतित्वादेरखण्डोपाधित्वमपि खण्डयति "उत्तरे"त्यादिना।

त्वाभावात् । निरुक्त-क्रियात्वत्वाद्यवच्छिन्न-शक्तता-ज्ञानत्वेन हेतुतामपेक्ष्य लघुतया तादृश-क्रियात्वावच्छिन्न-शक्तिमत्ता-ज्ञानत्वेनैव तथात्वौचित्यात् ( क )। गुरुत्वादि-( ख ) प्रयोज्यस्य पतनत्वादेरखण्डोपाधित्वे पत्यादि-धातूनां तत्र शक्तत्वेऽपि क्षत्यभावाच्च। पश्वादि-पदानामपि लोमवल्लाङ्गूल-पर्य्यवसिते पशुत्वादिमात्रे न शक्ति-( ग ) स्तत्र तत्र-वृत्ति-ग्रहोत्तरं तन्मात्रस्यैवानुभवेन तदाश्रयस्यालाभात्, लोमादीनां स्वाश्रय-तुल्य-वित्ति-वेद्यत्वस्य लोमवल्लाङ्गूलवान् देश इत्याद्यनुभवे व्यभिचारादिति प्राहुः ।

( घ ) तत्र ब्रूमः शाब्द-मतेर्गवादि-व्यक्त्यवगाहित्वं अवश्यं कारण

( क ) कारणत्वौचित्यादित्यर्थः ।

( ख ) ननु पतनत्वस्याखण्डोपाधित्वमवश्यमङ्गीकर्त्तव्यं, अन्यथा गुरुत्वस्य कार्य्यतावच्छेदकगौरवापत्तेः, एवञ्च तत्र शक्ति-स्वीकारे जाताविव शक्तिरिति सिद्धान्त-व्याघात इत्यत आह "गुरुत्वादी"ति । तथा च जाताविवेत्यत्र जाति-पदं अखण्डोपाधेरप्युपलक्षणं, एवञ्चाखण्डोपाधौ शक्तिस्वीकारेऽपि न क्षतिः ।

( ग ) पश्वादि-पदानां तादृश-पशुत्वविशिष्ट एव शक्तिरिति भावः ।

( घ ) प्रभाकरमते द्वितीय-तृतीय-कल्पयोर्दोषमाह "तत्रे"त्यादिना । "तत्र" प्राभाकरमते द्वितीय-तृतीय-कल्पयोरित्यर्थः । "ब्रूमः" जातेरेव शक्यत्वे बाधकं इति शेषः । "प्रयोज्यं" जन्यतावच्छेदकं वाच्यमिति शेषः । कुत इत्याकाङ्क्षायामाह "जन्यधी"त्यादि । "तत्प्रयोज्यत्वनियमात्" किञ्चिद्धर्म्मावच्छिन्न-कारणता-निरूपित-कार्य्यतावच्छेदकत्व-व्याप्तेरित्यर्थः । तथा च शाब्दबोधीय-गवादि-व्यक्ति-निरूपित-विषयिता किञ्चिद्धर्म्मावच्छिन्न-कारणता-निरूपित-कार्य्यतावच्छेदिका जन्यधी-विषयितात्वात् शाब्दबोधीय-गोत्व-विषयितावदिति-रीत्या न्याय-प्रयोगः । एवञ्चोक्तानुमानेन गवादि-विषयितायां किञ्चिन्निरूपित-कार्य्यतावच्छेदकत्व-सिद्धौ गोत्व-विशिष्ट-शक्तिज्ञानस्यैव शाब्दबोधीय-गोत्वविशिष्टगवादि-विषयित्वं जन्यतावच्छेदकं वाच्यं न तु गोत्वशक्ति-ग्रहस्य, तथासति गोत्व-शाब्दं प्रति गोत्वशक्ति-ग्रहत्वेन कारणताया उक्तत्वेन गोत्व-शाब्द-बोधस्य गोत्वविशिष्टगवावगाहिता न स्याद्विशिष्टगवावगाहि-बोधत्वावच्छिन्नं प्रति तस्याहेतुत्वाद्विशकलितगो-गोत्व-बोधेनापि तुल्य-वित्ति-वेद्यत्वस्योपपन्नत्वादित्यश्च शक्तिज्ञानजनकतावच्छेदकविषयिता-निरूपकत्वेन गोत्वस्येव गोरपि वाच्यत्व-सिद्धिः शक्ति-ज्ञान-जनकतावच्छेदक-विषयिता-विशेष-निरूपकत्वस्यैव शक्यत्व-पदार्थत्वादिति भावः । वस्तुतः शक्ति-ज्ञान-जन्यतावच्छेदक-विषयिता-विशेष-निरूपकत्वं शक्यत्वमित्यभिप्रेत्य द्वितीय-तृतीय-कल्पयोर्दोषमाह "तत्रे"त्यादिना ।

प्रयोज्यं जन्यधी-विषयितायास्तत्-प्रयोज्यत्व-नियमादन्यथा (क) पक्षधर्म्मिक-साध्यावगाहितादेरपि परामर्श-प्रयोज्यता न स्यादनुमिति-सामान्यं प्रत्येव ज्ञानत्वादिना हेतुत्वस्य लाघवेनौचित्यात्, (ख) पक्षतादिसहकृत-परामर्शाद्युत्तर-ज्ञानस्य (ग) तत्प्रकाशकस्यैव वानुव्यवसायस्य पक्षे साध्यावगाहित्व-नियमादेवानुमित्यादेः प्रतिनियत-पक्षाद्यवगाहित्व-सिद्धेः।

(घ) किञ्च गोत्व-शक्तत्वं न गोत्व-समर्थत्वं (ङ) यस्य धीरन्वय-धी-हेतुरप्रसिद्धत्वात् (च), नापि तद्गोचरमभिधा-नामकं

---

(क) "अन्यथा" जन्यज्ञान-विषयितायाः कारण-प्रयोज्यत्वानियमे इत्यर्थः।

(ख) नन्वेवं घटादिज्ञानोत्तरमपि वह्न्याद्यनुमितिः स्यादित्यत आह "पक्षतादी"त्यादि। तथा च यज्ज्ञानं पक्षतादि-सहकृत-यद्विषयक-यद्व्याप्यवत्त्वावगाहि-ज्ञानोत्तरं तत् तत्र तद्विषयकं इति व्याप्त्या साध्यावगाहित्व-सिद्धिरिति भावः। पक्षतादीत्यादिपदाद्बाधाभाव-परिग्रहः।

(ग) न च वह्निव्याप्यवत्त्व-ज्ञानोत्तरं कथञ्चिज्जायमाने घटादि-प्रत्यक्षे उक्त-व्याप्तेर्व्यभिचार इति वाच्यं तत्रानुमिति-सामग्र्याः प्रतिबन्धकत्वेन घटादि-प्रत्यक्षानुत्पादात्। नन्वेवं यत्र प्रत्यक्षेच्छासमवहितविनश्यदवस्थ-प्रत्यक्षसामग्रीसहित-भिन्नविषयकानुमिति-सामग्रीतः प्रत्यक्षं ततोऽनुमितिस्तत्र प्रत्यक्षे उक्त-व्याप्तेर्व्यभिचार इत्यत आह "तत्प्रकाशकस्ये"त्यादि। पक्षतादि-सहकृत-परामर्शोत्तरवर्त्ति-तत्तज्ज्ञानानुव्यवसायस्येत्यर्थः। तथा चेदं ज्ञानं पक्षे साध्यावगाहि तत्त्वेनानुव्यवसीयमानत्वादित्याद्यनुमानेन तत्र साध्याद्यवगाहिता-सिद्धिरिति साध्यावगाहित्वादिकं कस्यापि जन्यतावच्छेदकं न स्यादिति भावः।

(घ) ननु गवादेः शक्तिज्ञानप्रयोज्य-विषयिताविशेष-निरूपकत्वेऽपि न शक्यत्वं, किन्तु पदधर्म्मिक-स्वशक्तता-ज्ञानत्वावच्छिन्न-पूर्व्वोक्त-जनकतावच्छेदकविषयितानिरूपकत्वेन गोत्वादेरेव तथात्वमिति, तथा च गोत्व-प्रकारक-गो-विशेष्यक-शाब्दबोधं प्रति गोत्वशक्तिग्रहस्य हेतुत्वमिति प्रथमकल्पे गोत्वशक्तिग्रह-जन्यतावच्छेदकविषयितानिरूपकस्याऽपि गवादेः पूर्व्वोक्त-पदधर्म्मिक-शक्ति-ज्ञान-निष्ठ-जनकतावच्छेदक-विषयिता-निरूपकत्व-विरहात् न पदशक्यत्वसम्भवो गौरवेण गवादेः शक्तिज्ञान-निष्ठजनकतायामप्रवेशादन्यथात्मत्वात्मादिविषयिताया अपि गुरुमते तत्र प्रवेशापत्ति-रित्यतः प्रथम-कल्पेदोषमाह "किञ्चे"ति।

(ङ) "समर्थत्वं" जनकत्वमित्यर्थः। "यस्य" समर्थत्वस्येत्यर्थः।

(च) गोत्वस्य नित्यत्वेन तज्जनकत्वाप्रसिद्धेरिति भावः।

पदार्थान्तरं तत्र ( क ) मानाभावात्। न वा गोत्वानुभव-जनकत्वं, पटादि-पदस्यापि गोत्व-शक्तत्वापत्ते-स्तस्यापि गवादि-पदाकाङ्क्षादि-साचिव्येन गोत्वानुभव-जनकत्वात्। न च गोत्वानुभव-सामान्यं ( ख ) प्रति हेतुत्वं तथा, गवादि-पदेऽप्यसत्वात् ( ग )। नापि गोत्वानुभव-जनकत्व-प्रकारक-नित्य-सङ्केतवत्त्वं ( घ ), तादृश-सङ्केतवत्त्व-मात्रं ( ङ ) वा गोत्व-शक्तत्वमिति साम्प्रतं, गो-पदं गोत्वेन गवानुभवस्य जनकतया न सङ्केतितमित्यादि-ग्रहेऽपि तस्य ( च ) ग्रहाद् गोत्वेन गोरन्वय-धी-प्रसङ्गात्, किन्तु गोत्वेन गवानुभवस्य जनकतया सङ्केति-तत्वं तथा, तथा च पद-धर्म्मिक-तज्ज्ञानत्वेन गोत्व-प्रकारक-शाब्दं प्रति हेतुतायां गोत्वस्येव तद्विशिष्टस्य गोरपि विषय-विधया-ऽवच्छेदकत्वादवश्यं गोत्वादि-विशिष्टो गवादि-( १ ) गवादि-पद-स्यार्थः ॥ १८ ॥

स्यादेतत्, ( छ ) निरुक्तस्यैव सङ्केतस्य कुतः प्रथमतो ग्रहः? नोपमानात्, न कोषात्, न विवरणात्, न प्रसिद्धार्थ-शब्द-सामाधि-

---

( १ ) गवादिरिति क्वचिन्नास्ति।

---

( क ) "तत्र" अभिधायामित्यर्थः।

( ख ) गोत्वानुभवत्वावच्छिन्नं प्रतीत्यर्थः।

( ग ) "तथा" गोत्व-शक्तत्वं ; गोत्वस्य प्रत्यक्षे प्रमेयत्वादिना शाब्दबोधे च व्यभिचारेण गोत्वानुभवत्वावच्छिन्ने गो-पदस्याहेतुत्वादिति भावः।

( घ ) सङ्केतवत्त्वञ्च विशेष्यता-सम्बन्धेनेति भावः।

( ङ ) चैत्रादिपदस्य पित्रादि-सङ्केतितत्वेन तत्र नित्यसङ्केताभावादाह "तादृशे"त्यादि। गोत्वानुभव-जनकत्व-प्रकारक-सङ्केतवत्त्वमित्यर्थं। मात्रपदान्नित्य-सङ्केत-व्यवच्छेदः।

( च ) "तस्य" गोत्वानुभवजनकत्वेन संकेतितत्वस्येत्यर्थः।

( छ ) नैयायिकदत्तदूषणव्यस्तो मीमांसकः स्व-मत-साधारण-दोषमजानन्निव जिज्ञासा-मुखेन न्याय-मतमाक्षिपति "स्यादेत"दित्यादिना। स्यादेतदित्यस्य भवत्वेतद्दूषणमित्यर्थः।

कारणत्वापि वाक्य-शेषादमीषां (क) शक्तिग्रह-मूलकत्वेन पूर्व्वं पृथुकस्य (ख) कस्यापि तदसत्वादत आह—

सङ्केतस्य ग्रहः पूर्व्वं वृद्धस्य व्यवहारतः (ग)।
पश्चादेवोपमानाद्यैः शक्ति-धी-पूर्व्वकैरसौ॥ २०॥

प्रथमं पदेषु सङ्केत-ग्रहो वृद्धस्य व्युत्पन्नस्य शब्दाधीन-व्यवहारादेव बालानां, तथा हि गामानयेति केनचिन्निपुणेन (घ) नियुक्तः कश्चन व्युत्पन्नस्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति, (ङ) तच्चोपलभमानो बाल इदं गवानयनं स्व-(च) गोचर-प्रवृत्ति-जन्यं चेष्टात्वादस्मदीय-स्तन-पानादिवदित्यनुमाय सा गवानयन-प्रवृत्तिः (छ) स्व-विषय-धर्म्मिक-कार्य्यता-ज्ञान-जन्या प्रवृत्तित्वान्निज-प्रवृत्तिवदिति प्रवृत्तेर्गवानयन-धर्म्मिक-कार्य्यता-ज्ञान-जन्यत्वं प्रसाध्य (ज) गवानयन-गोचर-तज्-

---

(क) शक्तिग्रहकारणतया प्रसिद्धानां उपमानादीनामित्यर्थः। उपमानादीनां शक्ति-ग्रहहेतुत्वे पूर्व्वाचार्य्य-सम्मतिमाह "शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्याद्व्यवहारतश्च, वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति।

(ख) "पृथुकस्य" बालकस्येत्यर्थः। अज्ञात-शक्तिकस्येति यावत्। "पूर्व्वं" शक्ति-ग्रहात्, पूर्व्वमित्यर्थः। "असत्त्वात्" उपमानीनामसत्त्वादित्यर्थः।

(ग) "व्यवहारतः" चेष्टात इत्यर्थः। तथा च प्रथमं चेष्टया तत्कारण-प्रवृत्त्यनुमानं प्रवृत्त्या च तत्कारण-कर्त्तव्यताज्ञानस्यानुमितिस्ततस्तादृश-कर्त्तव्यताज्ञानेन तदसाधारण-कारण-स्यानुमितिस्तच्चासाधारण-कारणं भूतं वृद्ध-वाक्यमेव, तदनन्तरं प्रक्षेपोत्क्षेपाभ्यां वृद्धवाक्य-घटक-गवादिपदानां गवादिबोधजनकत्वमवधार्य्य गो-पदादाकाशादिबोध निवृत्तये गवादिपदेषु गवादि-बोधानुकूलः कश्चिद्गवाद्यर्थस्य सम्बन्धः कल्प्यते, स च सङ्केतलक्षणाद्यन्यतररूपस्तत्र च लक्षणाया-अघन्यत्वेन सङ्केतरूप एव सम्बन्धो गवादिपदेषु गवाद्यर्थानामिति भावः।

(घ) शक्तिग्रहवतेत्यर्थः।

(ङ) "तत्" गवानयनमित्यर्थः।

(च) "स्वं" गवानयनं।

(छ) "स्वं" प्रवृत्तिस्तथा च प्रवृत्ति विषयो यद्गवानयनं तद्विशेष्यक-कर्त्तव्यता-ज्ञान-जन्येत्यर्थः।

(ज) "प्रसाध्य" अनुमाय। इदश्चाग्रिमनुमानोपयुक्त-पक्षतावच्छेदक-प्रकारक-ज्ञान-सम्पत्त्यर्थं।

ज्ञान-(क) मसाधारण-हेतुकं (ख) कार्य्यत्वाद् घटवदित्येवमनुमिन्वानः समुपस्थितत्वात् लाघवाच्च (ग) श्रुतं वृद्धवाक्यमेव तदसाधारण-कारणत्वेनावधारयति। तदनन्तरञ्च गवादि-पदानां प्रत्येकमावापोद्वापेन (घ) गवादि-बुद्धौ जनकत्वमवगत्यानतिप्रसक्तये गवादि-सङ्केतस्य तदनुकूलत्वं कल्पयति (ङ)।

पश्चात्तु (च) क्वचिदुपमानाच्छक्ति-ग्रहो यथा—गवादि-पद-शक्ति-धी-साचिव्येन गो-सदृशस्यातिदेश-वाक्यात् (छ) गवय-पद-वाच्यत्व-बोधोत्तरं गवयत्व-जात्यवच्छिन्ने गो-सादृश्य-ग्रहात् गवयो गवय-पद-वाच्य इत्याकारः। क्वचिच्च व्याकरणात्, यथा कर्म्मणि द्वितीया, कर्त्तरि परस्मैपदमित्याद्यनुशासनात् कर्म्मत्वादौ द्वितो-

---

(क) "तज्ज्ञानं" कार्य्यता-ज्ञानमित्यर्थः।

(ख) गवानयन-धर्म्मिक-कार्य्यता-ज्ञानमात्र-वृत्ति-कार्य्यता-निरूपित-कारणताश्रय-किञ्चिन्निरूपित-कार्य्यतावदित्यर्थः।

(ग) प्रथमोपस्थितत्वं तादृशवाक्यस्येवान्यस्यापि सम्भवति, नियमतः प्रथमोपस्थितत्वञ्च तादृश-वाक्यस्याप्यसम्भवि, योग्यतादेरपि कदाचित्प्रथमतो ज्ञान-सम्भवादत आह "लाघवाच्चे"ति शाब्दबोध-पूर्व्ववर्त्तित्वेनावश्यक-क्लृप्त-वृद्धवाक्यातिरिक्तस्य तदसाधारण-कारणता-कल्पने गौरवादिति भावः।

(घ) "प्रत्येकं" तत्तत्पदत्वेन। "आवापोद्वापौ" अन्वय-व्यतिरेकौ प्रक्षेपोत्क्षेपाविति यावत्।

(ङ) गवादि-पदस्यार्थ-बोध-जनकत्वस्यार्थोपस्थिति-द्वारैव वाच्यं, अर्थोपस्थितौ तस्य जनकत्वमपि सम्बन्धि-ज्ञान-मुद्रयैव, तादृश-सम्बन्धस्य लक्षणा-वाधेन सङ्केतरूप एव न त्वन्यविधस्तथा सति विना लक्षणां गवादि-पदादाकाशादि-बोधापत्ति-रूपातिप्रसक्तिः स्यादिति भावः।

(च) कारिकापरार्द्धं व्याकुरुते "पश्चात्तु" इत्यादिना।

(छ) गो-सदृशो गवय-पद-वाच्य इत्याकारकातिदेश-वाक्यादित्यर्थः, अत्रायं क्रमः प्रथममतिदेश-वाक्याद्गो-सदृशत्वावच्छिन्ने गवय-पद-वाच्यता-ग्रहस्ततः संस्कारस्ततः कदाचित्प्रत्यक्षादिना गवयत्वावच्छिन्ने गो-सादृश्य-ग्रहस्ततोऽतिदेश-वाक्यार्थ-स्मरणं ततो गवयो गवय पद-वाच्य इति गवयत्वावच्छिन्ने वाच्यताया ग्रह इति भावः।

यादेः (क)। क्वचित् कोषादपि यथा "गुणे शुक्लादयः पुंसि गुणि-लिङ्गास्तु तद्वति"। "शीतं गुणे तद्वदर्थाः (ख) सुषीमः शिशिरो जड़ः"। "चूर्णे क्षोदः समुत्पिञ्ज-पिञ्जलौ भृशमाकुले" इत्यादि-कोषेभ्यः श्वेत्यादौ शुक्लादि-शब्दस्य (ग)। क्वचिद्विवरणा-(घ) दपि यथा पचति पाकं करोतीति तुल्यार्थक-वाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थक-शब्द-समानाधिकरण्या-(ङ) दपि यथा "नीरूप-स्पर्शवान् वायुर्निस्पर्शं मूर्त्तिमन्मन इत्यादौ रूप-शून्यस्पर्शवदादिषु वाय्वादि-पदस्य, वायुत्वादि-जातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्न-स्यानुपस्थित्या तत्र शक्ति-ग्रहायोगात्—(च) यथा वा—"सत् कृत्यालङ्कृतां कन्यां ददानः कुकुदः स्मृत" इत्यादावुक्तरीत्या कन्या-दात्रादिषु कुकुदादि-पदस्य। (छ) "इह सहकार-तरौ मधुरं रौति पिक" इत्यादिकन्तु न युक्तमुक्तक्रमेण (ज) शक्ति-ग्रह-स्योदाहरणं, (झ) तिङर्थे धर्म्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्न-

(क) शक्ति-ग्रह इत्यनेनान्वयः।

(ख) "तद्वदर्थाः" शीतवदर्था इत्यर्थः, सुषीमादयः शीतवदर्था इति।

(ग) शक्ति-ग्रह इति पूर्व्वेणान्वयः।

(घ) स्फुटतया प्रकृतवाक्यार्थस्य कथनं विवरणं।

(ङ) समभिव्याहारादपीत्यर्थः।

(च) गुरुमते वायोरपि प्रत्यक्षत्वाङ्गीकाराद्वायुत्व-विशिष्ट एव शक्ति-ग्रह-सम्भव इत्यत आह "यथावे"ति।

(छ) मणिकृदुक्तमुदाहरणं दूषयति "इहे"त्यादिना। इहेत्यादि-पिक इत्यन्तस्य एतत्-सहकारतरुवृत्तिमधुर-रव-कर्त्ता पिकपद-वाच्य इत्यर्थः।

(ज) प्रसिद्धार्थकपदसन्निध्येनेत्यर्थः।

(झ) "तिङर्थे धर्म्मिणी"ति वैयाकरणमताभिप्रायेण, तैः कर्त्तर्य्याख्यातस्य शक्त्यङ्गी-कारात्, आख्यातस्य कृतौ शक्तिरिति न्यायमते तु "तिङर्थे धर्म्मिणी"त्यस्य तिङर्थ-कृत्यवच्छिन्न-धर्म्मिणीत्यर्थः। तथा चोभयमत एव कृत्यवच्छिन्न-विशेष्यकान्वय-बोधं प्रति नाम-पद-जन्यायास्ति-ङन्य-पद-जन्याया वा कृत्युपस्थितेस्तन्त्रत्वमिति सूचितं, नातः पचतिगच्छतीत्येताभ्यां विशिष्टबोध इति भावः।

त्वात्, (क) प्रत्यक्ष-सिद्ध-कोकिलत्व-जात्यवच्छिन्न एव लाघवेन पिक-शब्दस्य शक्त्यवच्छेदाच्च। क्वचिद्वाक्य-शेषादपि यथा यव-पदस्य कङ्गु-प्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेक-मात्रे शक्तेः परिच्छेत्तु-मशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् (ख)।

"यवमयश्चरुर्भवतीति" श्रुतौ यव-पदस्यार्थ-सन्देहे—

"वसन्ते सर्व्वशस्यानां जायते पत्र-शातनम्।
मोदमानास्तु तिष्ठन्ति (१) यवाः कणिश-शालिनः" ॥ इति ॥

विध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्य-शेषाद्दीर्घ-शूक एव यव-पदस्य शक्ति-ग्रहः,—"कणिशं" शस्य-मञ्जरी। (ग) यथा वा—स्वाराज्य-कामोऽग्निष्टोमेन "यजेते"त्यादि—विधि-शेषी-भूतेभ्यः—

---

(१) मोदमानाः प्रदृश्यन्ते इति तत्त्वचिन्तामणौ पाठः।

---

(क) मणिकृन्मते योयः शूद्रस्यान्नं पचति सोऽतिनिन्दित इत्यादौ तिङर्थावच्छिन्न-विशेष्य-कान्वयि-बोधस्याङ्गीकारादाह "प्रत्यक्ष-सिद्धे"त्यादि।

(ख). नानार्थ-शक्तौ गौरवादिति भावः।

**(ग)** दीर्घशूके शक्ति-ग्रहस्य शिष्ट-व्यवहार-सिद्धत्वेन तत्र शक्ति-ग्रहस्य वाक्य-शेषनियम्यत्वं न सम्भवतीत्यत आह "यथा वे"त्यादि। "यन्न दुःखेन सम्भिन्न"मित्यादि पृः५२ पः१। "न दुःखेन सम्भिन्नं" न दुःख-समानाधिकरणं, न दुःखावच्छेदक-शरीरावच्छेद्यमिति यावत्, दुःखावच्छेदका-वृत्ति-जातिमच्छरीरावच्छेद्यमिति निष्कर्षः, एतादृशञ्च सुखं एकजन्मावच्छेदेन दुःखानुत्पाद एव सम्भवति, एवञ्च यादृश-शरीरावच्छेदेन दुःखं कदाचिदपि नोत्पन्नं तादृश-शरीरावच्छिन्न-सुखमिति फलितार्थः। तथा च राजचक्रवर्त्तिनो धारावाहिक-सुखमात्रावच्छेदक-पुण्य-परिपाक-मात्रजन्य—खण्ड-शरीरावच्छिन्न-सुखस्य न स्वर्गत्वं तच्छरीरस्य निरुक्त-जाति-शून्यत्वात्। स्वर्गिणो मरणेऽपि न दुःखं "ते नराः सुख-मृत्यव" इति वेदेन तथैव प्रतिपादनात् तच्छरीरस्य पापा-जन्यत्वात्। "न च ग्रस्त"मिति "ग्रासो" लौकिकसुखापेक्षयाऽपकर्षस्तच्छून्यमित्यर्थः। "अनन्तरं" "अन्तरा" विच्छेदस्तद्रहितं, स्वाश्रयावच्छेद्य-सुखानधिकरण-कालोत्तरोत्पत्तिक-सुखाव-च्छेदक-वृत्ति-जातिमदनवच्छेद्यमिति यावत्, स्व-पदं जातिपरं, स्वर्गिणः सुषुप्तौ मानाभावात्। युगपत्सकल-ब्रह्माण्ड-प्रलयाभावाच्च, सत्ता-द्रव्यत्वादेः स्वाश्रयावच्छेद्य-सुखानधिकरण-कालाप्रसिद्ध्या न तदादायासम्भवः। तादृशोत्पत्तिक-सुखावच्छेदकावृत्ति-जातिमच्छरीरावच्छेद्यमिति वा अनन्तरत्वं वक्तव्यं, अत्रापि स्व-पदं शरीर-वृत्ति-जाति-परं, एवञ्च एकदा सकल-ब्रह्माण्ड-प्रलयाङ्गीकारेऽपि न

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः-पदास्पदम्" ॥
इत्यादि-वाक्येभ्यः स्वरादि-पदस्य ॥ २० ॥

ननु (क) व्यवहारादनुमिते गवाद्यानयन-धर्म्मिक-कार्य्यत्व-स्यान्वय-(१) ज्ञाने पदानां प्रथमतः कारणत्वं साकाङ्क्ष-(ख)

(१) कार्य्यतान्वय इति पाठः क्वचित् ।

क्षतिः । "अभिलाषोपनीतं" सुखाभिलाषानन्तरं-तत्साधनार्ज्जन-विलम्बासहमित्यर्थः, स्व-समानाधिकरण-स्वविषयकाभिलाषोत्पत्त्यनियत-सामग्र्यजन्यमिति यावत्, स्व-समानाधिकरणत्वञ्च स्वावच्छेदक-शरीरावच्छेद्यत्वं एतच्चाभिलाष-विशेषणं तेन संसार-दशायां स्वर्गाभिलाषि स्वर्गानुत्पादेऽपि न क्षतिः, विनाभिलाषमुत्पन्ने स्वर्गेऽव्याप्ति-वारणाय निषेध-द्वय-गर्भता, स्वर्गिणां तथैव विलक्षण-मदृष्टं यतः सुखाभिलाष-समय एव सुख-कारणानां सर्व्वेषां सम्पत्तिः । स्वर्गजनकादृष्टस्य प्रतिबन्धकत्वेन तत्र पात-भयज-दुःखमपि नास्ति । तथा चाविरल-लग्न-प्रवाह-चिरस्थायीच्छाधीन-योग्य-दुःखासम्भिन्न-सुखं स्वर्गपदस्यार्थ इति पर्य्यवसितम् । मिलित-धर्म्म-चतुष्टयस्यैव शक्यतावच्छेदकत्वं । न चायत्नत्वादि-विशेषण-वैयर्थ्यं तादृश-सुखस्यैव निरुक्त-दुःखासम्भिन्नत्व-नियमेनाव्यावर्त्तकतया दुःखा-सम्भिन्नसुखत्वस्यैव शक्यतावच्छेदकत्वौचित्यात् यागादि-विशिष्ट-दुःखासम्भिन्न-सुखे मानाभावादिति वाच्यं प्रवृत्तिनिमित्ते विशेषण-वैयर्थ्यस्यादोषत्वात्, यत्प्रकारेण स्वारसिक-बोधं तस्याव्यावर्त्तकस्य गुरुतरस्यापि शक्यतावच्छेदकत्वमिति भावः । अन्ये तु स्वर्गेच्छाया औत्कट्य-ज्ञापनार्थं मिलितस्य शक्यतावच्छेदकत्वं, अन्यथा दुःखासम्भिन्न-सुखमुद्दिश्य यागादौ कृते स्वर्ग-शरीरावच्छेदेन विच्छेदेन तादृश-सुखोत्पत्त्याऽपि कामनाविषयस्य सिद्धि-सम्भव एवं अभिलषित-सुखानुत्पादेऽपि अन्यविध-निकृष्ट-सुखधारा-सम्भवश्चेति स्वर्गेच्छाया औत्कट्यं न व्यञ्जितं स्यात्, इच्छाया औत्कट्ये विषयोत्कर्षस्य नियामकत्वात् विषयोत्कर्ष-सूचकं विशेषण-चतुष्टयं । केचित्तु सुखत्वमेव स्वर्गपद-शक्यतावच्छेदकं दुःखासम्भिन्नत्वादिकं प्रयोगोपाधिः, प्रयोगोपाधित्वञ्च विशेष्यतासम्बन्धेन शक्ति-प्रमया स्वर्गपदजन्य-शाब्दबोधोत्पत्ति-प्रतिबन्धकान्योन्याभावप्रतियोगितावच्छेदकत्वं विशेष्यतासम्बन्धेन तादृश-स्वर्गपदजन्य शाब्दबोधे दुःखासम्भिन्नादि-भेदस्य प्रतिबन्धकत्वादेवञ्च न स्वर्गपदात् सांसारिक-सुख-बोध-प्रसङ्ग इति । "स्वःपदास्पदं" स्वः-पद-शक्यमित्यर्थः ।

(क) "व्यवहारा"दित्यत्र ल्यब्लोपे पञ्चमी, तथा च व्यवहारं प्रतीत्येत्यर्थः व्यवहार-ज्ञानादुत्तरमिति यावत् ।

(ख) कार्य्यता-साकाङ्क्षेत्यर्थः ।

पदत्वावच्छेदेन गृहीतमुपस्थितत्वादतस्तदुपपत्तये (क) शाब्द-सामान्यं प्रत्यवश्यं कार्य्यता-वाचि-पदस्य तत्-साकाङ्क्ष-(ख) पदस्य वा हेतुत्व-मुपेतव्यं, तथा च कथं केवल-कोषादितः शक्ति-ग्रहस्तस्य विध्यना-काङ्क्षत्वेना-(ग)-र्थवादतया शाब्द-वोधानर्जकत्वादिति—प्राभाकर-शङ्कां निरस्यति ॥

> कार्य्यत्वस्यान्वय-ज्ञाने प्रागगृहीताऽपि हेतुता ।
> पदानामर्थ-वादेभ्यः पश्चाद्बोधादुपेक्ष्यते ॥ २१ ॥

साकाङ्क्ष-पदत्वावच्छेदेन कार्य्यता-धी-जनकत्वं पूर्व्वगृहीतस्याप्युत्तर-कालमर्थवादेभ्यः—शाब्द-वोधानुरोधादुपेक्ष्यते। पूर्व्वगृहीतस्यापरि-हार्य्यत्वानियमात्, प्रतिविम्बिते वस्तुनि व्यभिचारात् (घ), न वोप-स्थित-धर्म्मावच्छेदेनैव जनकत्वस्य ग्रह-नियमः, पट-जनकं देय-द्रव्यमित्यादौ तत्-सामानाधिकरण्येनापि ग्रहात्, अन्यथा (ङ) अन्यथाख्यातिस्तत्रैव दुर्व्वारतापत्तेः। न च कार्य्यता-साकाङ्क्ष-पदान्त-र्भावेणैव शब्दानामन्वयानुभव-हेतुत्वस्य क्लृप्तत्वादर्थवाद-स्थले न शाब्दधीः परन्त्वसंसर्गाग्रहमात्रमाकाङ्क्षान्तर-(च) कल्पने गौरवा-दिति वाच्यं, कार्य्यता (छ) निराकाङ्क्ष-पदान्तर्भावेणैव शाब्द-धी-हेतुत्वस्य कल्पनया विधि-स्थले न शाब्दधीरित्यस्यापि सुवचत्वात्,

---

(क) कार्य्यतासाकाङ्क्ष-पदस्य कारणत्वोपपत्तये इत्यर्थः।

(ख) कार्य्यतावाचिपदमात्रस्य शाब्द-वोध-जनकत्वे तत्साकाङ्क्षान्यपदस्य शाब्द-वोध-जन-कता न सम्भवतीत्यत आह "तत्साकाङ्क्षे"त्यादि।

(ग) कार्य्यतावाचिपद-निराकाङ्क्षत्वेनेत्यर्थः।

(घ) निर्म्मलत्वादिरूपदोषजन्य-दर्पणादि-धर्म्मिकारोप-विषयस्य मुखस्य दर्पणासन्निधाने-ऽपरिहार्य्यत्वाभावादिति भावः।

(ङ) देयद्रव्यत्वावच्छेदेन पट-जनकत्वग्रहे इत्यर्थः।

(च) कार्य्यतानिराकाङ्क्षपदान्तर्भावेण कारणत्वान्तरेत्यर्थः।

(छ) प्रतिवन्धि-मुखेनोत्तरयति "कार्य्यते"त्यादिना।

(क) उभयत्राप्यन्वय-मतेरानुभविकत्वेनैकशेषस्य दुष्करत्वादिति दिक् ॥ २१ ॥

पारिभाषिकीमौपाधिकीञ्च संज्ञां क्रमेण लक्षयति—

उभयावृत्ति-धर्म्मेण संज्ञा स्यात् पारिभाषिकी ।
औपाधिकी त्वनुगतोपाधिना (ख) या प्रवर्त्तते ॥ २२ ॥

उभयावृत्ति-धर्म्मावच्छिन्न-सङ्केतवती संज्ञा पारिभाषिकी, यथा आकाश-डित्थादि, सा हि द्वितयावृत्ति-धर्म्मेणैव शब्दादिना रूपेण तदाश्रयमभिधत्ते, न चाकाशादि-पदस्य गगनादौ निरवच्छिन्नैव शक्तिः पटादि-पदस्यापि पटादौ तादृश-शक्त्यापत्तेः । पटे शक्तमपि पट-पदं न पटत्वावच्छिन्न-शक्तिमदित्यादि-ग्रहोत्तरं ततः पटत्व-विशिष्टस्याननुभवादवश्यं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमप्याकाश-पदं न शब्दवत्त्वावच्छिन्न-शक्तिमदित्येवं ग्रह-दशायामाकाशादि-पदान्न-शब्दवत्त्वेन गगनस्य प्रतीतिरतस्तस्यापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम् । एतेन (ग) पटत्वाद्युपलक्षिते धर्म्मिण्येव शक्ति-ग्रहस्य तादृूप्येण पटाद्यनुभवं प्रति हेतुत्वान्मास्तु पटादि-पदस्यापि पटत्वाद्यवच्छिन्ने शक्तिः, परन्तु पटत्वाद्युपलक्षित-व्यक्तिष्वेवेति शिरोमण्युक्तमपि प्रत्युक्तं । शब्दोपलक्षित-धर्म्मिणि शक्ति-ग्रहादेवाकाशादि-पदात्तदंशे निर्व्विकल्पात्मक-स्मरणमन्वयानुभवश्चोत्पद्यत इति तु नानुभविकं न वा यौक्तिकं ।

या चानुगतोपाध्यवच्छिन्ने सङ्केतवती संज्ञा सा त्वौपाधिकी यथा भूत-दूतादिः, सा हि सचेतना-वृत्ति-विशेषगुणवत्त्व-वार्त्ताहारकत्वाद्यनुगतोपाधि-पुरस्कारेणैव प्रवर्त्तते, शब्दादिकस्तु सखण्डत्वेनोपाधिरपि नानुगतो द्वितयावृत्तित्वादतः पारिभाषिके गगनादि-पदे

(क) विध्यर्थवादोभयदेत्यर्थः ।

(ख) सखण्डधर्म्मेणेत्यर्थः ।

(ग) पटपदं न पटत्वावच्छिन्ने शक्तिमत् इत्यादिग्रहोत्तरं पटत्वविशिष्टाननुभवेनेत्यर्थः ।

नातिप्रसङ्गः। घटत्वादि-जातिः संस्थान (क) वृत्तित्व-मते, यदि घटादि-पदं विलक्षण-संस्थानवत्त्वेन शक्तं तदौपाधिकमेव यदि च परम्परया (ख) वैलक्षण्यवत्वेन तदा नैमित्तिकमेव, वस्तुतः (ग), सामान्यस्य शाब्दबुद्धौ स्वरूपतः प्रकारत्वं समवायेनैवेत्यभिहितं प्रागिति (घ)॥ २२॥

ये तु जात्यवच्छिन्न-सङ्केतवतामपि चैत्रादि-पदानां पारिभाषिकत्व-माहुस्तेषां मते त्रैविध्यमन्यथा निर्व्वक्ति।—

यद्वाधुनिक-सङ्केत-शालि स्यात्पारिभाषिकम्।
जात्या नैमित्तिकम् शक्तमौपाधिकमुपाधिना॥ २३॥

यत्रार्थे यन्नामाधुनिक-सङ्केतवत्तदेव तत्र पारिभाषिकं, यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि, यथा वा शास्त्रकृद्भिः सिद्ध्य-भावादौ पक्षतादि (ङ)। जात्यवच्छिन्न-शक्तिमन्नाम नैमित्तिकं यथा गो-गवयादि। यदुपाध्यवच्छिन्न-शक्तिमन्नाम तदौपाधिकं यथा आकाश-पश्वादि। आधुनिकस्तु सङ्केतो न शक्तिर्नित्यस्यैव तस्य तथात्वात्। तदुक्तं भर्त्तृहरिणा—

आजानिकश्चाधुनिकः सङ्केतो द्विविधो मतः।
नित्य आजानिकस्तत्र (च) या शक्तिरिति गीयते॥

न च (छ) पित्रादिना सङ्केतित-चैत्रादि-पदे नित्य-सङ्केतवत्त्वे

(क) संस्थानं अवयव-संयोग-विशेषः।

(ख) स्वाश्रयारम्भकत्वरूप-परम्परयेत्यर्थः।

(ग) यदि चेत्यनेन सूचितमस्वरसं स्वयं प्रकटयति "वस्तुत" इत्यादि।

(घ) "प्रागि"ति भट्टमतविचारावसरे इत्यर्थः। पृः ४० पः ८।

(ङ) "शास्त्रकृद्भिः" नैयायिकादिभिरित्यर्थः। "पक्षता" अनुमित्सा-विरह-विशिष्टायाः सिद्धेरभाव इत्यर्थः। आदिपदात् व्याप्त्यादि-पद-संग्रहः।

(च) तयोर्मध्ये इत्यर्थः। "आजानिकः" कालत्वव्यापकः

(छ) "न चे"त्यस्यास्तीत्यनेनान्वयः।

मानमस्ति (क) "द्वादशेऽहनि पिता नाम कुर्य्या"दिति श्रुतेः पितृ-कर्त्तव्य-सङ्केत-विधायकमात्र-परत्वात्, चैत्रादि-(ख) पदस्य शक्ति-मत्त्वे पूर्व्वपूर्व्व-प्रयुक्तत्वापाताच्च, तस्य तन्नियतत्वादित्युक्तत्वात् (ग) चैत्रादि-पदानामिव (घ) पारसीकादि-शब्दानां सङ्केतवत्त्वाविशेषेऽपि न तेषां धर्म्म-कर्म्मण्युपयोगः, "साधुभिर्भाषितव्यं नापभ्रंशितवै न म्लेच्छितवै" इति श्रुत्या तत्र तन्निषेधात्, "म्लेच्छितवै" म्लेच्छमात्र सङ्केतितैः (ङ) खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्य्यैरपि सङ्केतिताः।

ननु गवादि-पदं गोत्वादिनेव संस्थान-प्रभेदेनाऽपि विशिष्ट एव गवादौ शक्तमिति तथापि तदौपाधिकं स्यात्, (च) न स्याच्छक्यत्वाविशिषेऽपि गोत्वाद्यपेक्षया गुरुत्वेन संस्थानस्य गवादि-पद-शक्यतानवच्छेदकत्वात्। (छ) न च संस्थानमशक्यमेव गवादि-पदस्येति देशनीयं, गवादि-पदाद् गोत्वादि-जात्या इव सास्नादि-लक्षण-विल-

(क) ननु द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुतिरेव मानमित्यत आह "द्वादश" इत्यादि।

(ख) साधकाभावमुक्त्वा बाधकमप्याह "चैत्रादी"ति।

(ग) "तस्य" नित्यसङ्केतस्य, "तन्नियतत्वात्" पूर्व्वपूर्व्व-प्रयुक्तत्व-नियतत्वात्, उक्तञ्चैतत् १६ कारिकायां पृः ३३ पः २।

(घ) ननु सङ्केतवत्त्वाविशेषेण चैत्रादि-पदवत् पारसीकादि-पदानामपि धर्म्म-कर्म्मण्युपयोगः स्यादित्यत आह "चैत्रादिपदानामिवे"त्यादि।

(ङ) "म्लेच्छमात्र-सङ्केतिते"त्यत्र मात्रपद-व्यावृत्तिमाह "खरादी"त्यादिना, तत्र साधुत्वं व्याकरणपरिगृहीतत्वं, यः शब्दो यस्मिन्नर्थे व्याकरण-परिगृहीतः स तत्र साधुः। अतएव "व्याकरण-परिगृहीतत्व-तदभावाभ्यामेव प्रामाणिकानां साध्वसाधु-व्यवहारात्, तावेव ते" इति शक्तिवादे गङ्गेशोपाध्यायैरभिहितम्। वृत्तिमत्त्वमेव तादृश-साधुत्व-नियामकमिति १४ कारिकायां लक्षक-नाम-विचारे व्यक्तीभविष्यति।

(च) शङ्कां निरस्यति "न स्या"दित्यादिना।

(छ) ननु संस्थानस्य शक्यत्व एव मानाभावस्तथा च "शक्यत्वाविशेषेपी"त्युक्तिरयुक्तेति शङ्कते "न चे"ति। अस्य च देशनीयमित्यनान्वयः।

लक्षणाकृत्याऽपि नियमतो गवादेरनुभवेन तस्यापि तच्छक्यत्वात् (क) तथा च न्याय-सूत्रम्। "जात्याकृति-व्यक्तयस्तु पदार्थ" इति, (१) "पदार्थो" गवादि-पद-शक्यः, त्रिष्वेक-शक्तेर्लाभार्थमेक-वचनं। (ख) अन्यथा विभिन्न-शक्तौ विशकलितानामेव तासामनुभवस्य गौर्नित्या गुणो वेत्यादौ लक्षणाद्यभावस्य च (ग) प्रसङ्गादिति साम्प्रदायिकाः।

---

(१) व्यक्त्याकृति-जातयस्तु पदार्थ इति सूत्र सम्मतः पाठः, न्याय-सूत्रे अः २। आः २। सूः ६८।

---

(क) "तच्छक्यत्वात्" गवादिपदशक्यत्वादित्यर्थः तस्याशक्यत्वे नियमतस्तत्प्रकारक-शाब्द-बोधानुपपत्तिरिति भावः। नन्वेवं गोत्वस्येव संस्थानस्यापि शक्यतावच्छेदकत्वं स्यादिति चेन्न तन्नियामकाभावात्, तन्नियामकञ्चावच्छेद्यतासम्बन्धेन बोधविषयत्वांशे सङ्केतप्रकारत्वं, तच्च गोत्व एव न तु संस्थाने, तस्य गुरुतया तेन सम्बन्धेन तत्रासम्बन्धित्वात्। न चैवं तस्य शक्यतानवच्छेदकत्वे शाब्दबोध-विशेष्यत्वापत्तिरिति वाच्यं बोधविषयत्वांशे सङ्केत-विशेष्यतायास्तन्नियामकत्वेन तत्र तदभावात्। तस्य गोत्वस्य च बोधविषयत्वांशे सङ्केतीय-प्रकारतावत्त्वेन तयोः शाब्दबोधे प्रकारत्वमेव, तदंशे सङ्केतीय-प्रकारतायाः शाब्दबोध-प्रकारता-नियामकत्वात्। सङ्केतप्रकारत्व-मनुभयोरेकस्यावच्छेद्यता-सम्बन्धेनापरस्य च सामानाधिकरण्य-सम्बन्धेनेति। अतएवेश्वरसङ्केतश्च संस्थानवती गौर्गो-पदाद्बोद्धव्येतीत्याकारक एव, तत्र च संस्थानं गोत्वञ्चोद्देश्यतावच्छेदकं बोधविषयत्वं विधेयं, असति बाधके विधेये उद्देश्यतावच्छेदकं यथायथं सामानाधिकरण्यावच्छेद्यत्वाभ्यां भासते, तथा चोभयोरपि बोधविषत्वांशे सङ्केत-प्रकारत्वमुपपन्नमिति न कोऽपि दोषः। रूपादिष्वाकृतेर-भावात् रूपादिपदस्य त्रिषु शक्तेरसम्भव इत्यतः सूत्रस्थ-पदार्थ-शब्दस्यार्थमाह "पदार्थोगवादिपद शक्य" इति।

(ख) "अन्यथा" त्रिष्वेकशक्त्यभावे इत्येवार्थः न तु तासामशक्यत्वे इति, तथा सति "विशकलितानां" मित्यादिना वक्ष्यमाणस्य दोषस्यासम्भवादित्यभिप्रायेणाह "विभिन्नशक्ता" विति। "विशकलितानां" परस्परमसंसृष्टानामित्यर्थः।

(ग) विशकलितानुभवे इष्टापत्तावाह "गौर्नित्ये"त्यादि गोत्वं नित्यमित्यर्थः, गौर्गुणः आकृति-विशेषो गुण इत्यर्थः। तथा च गौर्नित्येत्यत्र गवादि-पदस्य लाक्षणिकत्वानभ्युपगमे जितं जातिशक्तिवादि-मीमांसकैरिति भावः। यद्वाऽन्वयं प्रसङ्गादित्यत्रान्वेति।

नव्यास्तु जाति-व्यक्त्योरेवैक-शक्ति-प्रामाण्यार्थं सौत्रमेक-वचनं, आकृति-रूपन्तु संस्थानं पृथगेव शक्यं, शक्य-(क)-श्चैक-पदोपस्थाप्ययोरप्याकृति-व्यक्त्योर्भेदान्वय-बोधनं गवादि-शब्देन, व्युत्पत्ति-वैचित्र्यात् (ख), अत एव (ग) संस्थानानुपस्थितौ केवल-गोत्वादि-प्रकारेण व्यक्तेरवगमः शक्त्यैव सम्पद्यते। यद्येवं संस्थान-व्यक्त्योरेवैक-शक्तिर्गोत्वादि-जातावेव शक्त्यन्तरं तद्वैशिष्ट्यन्तु पदार्थ-विधया (घ) युस्माकमिवास्माकं वाक्यार्थ-विधया (ङ) भासते इत्येव किं न स्यात्? न स्यादेव समवायेन गोत्वादिमदपेक्षया परम्परया संस्थानवतः परम-गुरुत्वेनाशक्यत्वात्, शक्यतायाः किञ्चिद्धर्मावच्छिन्नत्व-नियमात्, शुद्ध-गोत्वादौ तदयोगाच्चेत्याहुः।

---

(क) नन्वेकपदोपस्थाप्ययोर्मिथो भेदान्वयस्याव्युत्पन्नत्वादिदमयुक्तमित्यत आह "शक्य"-मिति समर्थनीयमित्यर्थः। "च:" पुनरर्थे।

(ख) एकपदोपस्थाप्याख्यातार्थकृति-वर्त्तमानत्वयोर्भेदेनान्वय-बोधोपपत्तये तादृशव्युत्पत्तौ तत्तत्स्थलान्यत्व-निवेशवदेतत्स्थलान्यत्वस्यापि निवेशेनैव सर्व्वमुपपादनीयमिति भाव.।

(ग) "अतएव" संस्थानस्य पृथक्-शक्यत्वादेवेत्यर्थः। अनेन सम्प्रदायिकमतेऽस्वरसः सूचितः। स चैकशक्तिविषयानां त्रयाणामेकं परित्यज्यान्ययोरुपस्थित्यसम्भवात्तादृशबोधानुपपत्तिरूप इति भावः।

(घ) जरन्नैयायिकः शङ्कते "यद्येव"मित्यादिना। "तद्वैशिष्ट्यं" गोत्व-वैशिष्ट्यमित्यर्थः। "पदार्थविधया" शक्तिज्ञानप्रयोज्य-विषयतयेत्यर्थः। "अस्माकं" जरन्नैयायिकानामित्यर्थः।

(ङ) "वाक्यार्थविधया" शक्तिज्ञानाप्रयोज्य-विषयतया संसर्गविधया वेत्यर्थः आकाङ्क्षादि-प्रयोज्य-विषयतयेति यावत्। युष्माकं नव्य-नैयायिकानां मते यथा गोत्व-विशिष्टस्य पदार्थतया भानं तथाऽस्मन्मते तस्य वाक्यार्थतया भानमिति भावः, उत्तरयति "न स्यादेवे"ति। "परम्परया" स्वाश्रय-समवेतत्वरूप-परम्परासम्बन्धेनेत्यर्थः। ननु गोत्वादिजातेः संस्थान-समवेतत्व-मते परम्परासम्बन्धान्तर्भावेण शक्तिकल्पनस्यावश्यकत्वादुभयमत एव गौरव-दोषस्तुल्य इत्यतो जातेर्भिन्ना शक्तिरिति यन्मतं तन्मते दोषान्तरमाह "शक्यताया" इत्यादिना। "शक्यतायाः" शक्ति-विशेष्यताया इत्यर्थः। अत्र च नव्यमते "आहु"रित्यनेनास्वरसः सूचितः, स च सूत्रे एकवचनोपादानासङ्गति-रूपः। अतएव स्वमतमाह "मिथोवैशिष्ट्ये"त्यादि-"वस्तुगति"रित्यन्तेन

पृः ५९, पः ५।

मिथो-वैशिष्ट्य-विधुराभ्यां चन्द्रत्व-सूर्य्यत्वाभ्यामवच्छिन्नैक-शक्तिमतः पुष्पवन्त-पदस्येव गोत्व-संस्थान-प्रभेदाभ्यामिवावच्छिन्नैक-शक्तिमतो गवादि-पदस्यापि जात्यवच्छिन्न-शक्तिमत्तया नैमित्तिक-संज्ञात्वेऽपि नौपाधिक-संज्ञात्वं, सखण्डोपाधिमात्रावच्छिन्न-शक्तिमत एव नाम्नस्तथात्वादिति वस्तुगतिः।

(क) सौत्रमाकृति-पदं न संस्थान-परं, परन्तु करण-व्युत्पत्त्याऽऽकार-निरूपकार्थकं जाति-व्यक्त्योः संसर्ग-परमेव, अन्यथा (ख) समवायादेरपि सम्बन्ध-विधया गवादि-पद-शक्यत्वेन तदनुक्त्या मुनेर्न्यूनत्वापत्तेः। कादाचित्कस्तु जाति-संस्थानाभ्यां गवादेरवगमो गवादि-शब्दस्य जात्याकृति-विशिष्टे शक्ति-भ्रमेण (ग) लक्षणया वा सम्पाद्य इति पुनर्न्यायरहस्येऽस्मद्गुरुचरणाः॥ २३॥

लक्षकं नाम लक्षयति—

याद्दशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत्।
(घ) तत्र तल्लक्षकं नाम तच्छक्ति-विधुरं यदि॥ २४॥

याद्दशार्थस्य सम्बन्धवति यन्नाम सङ्केतितं तदेव ताद्दशार्थे लक्षकं यदि ताद्दशार्थे शक्ति-शून्यं भवेत्, सैन्धवादयस्तु शब्दास्तुरगादि-सम्बन्धिनि लवनादाविव तुरगादावपि शक्ता एव, गङ्गादयस्तु तीरादावसङ्केतितास्तत्-सम्बन्धि-नीरादि-शक्तत्वेन गृहीता एव तीराद्यन्वयं

(क) देवीपुत्रमतमाह "सौत्र"मित्यादिना। "करणव्युत्पत्त्ये"ति आक्रियते व्यज्यतेऽनेनेति व्युत्पत्त्याकृतिपदं जाति-गोचर-लौकिक-प्रत्यक्ष-प्रयोजक-संसर्ग-परमिति भावः।

(ख) "अन्यथा" सौत्राकृति-पदस्य संस्थान-परत्वे इत्यर्थः। "मुनेः" गोतमस्येत्यर्थः।

(ग) दोषघटित-भ्रमसामग्र्यभाव-दशायां ताद्दश-बोधस्यानुभव-सिद्धत्वेऽप्याह "लक्षणया वे"ति।

(घ) याद्दशानुपूर्व्व्यवच्छिन्नं नाम याद्दशार्थ-निरूपित-शक्ति-शून्यं सत् याद्दशार्थ-सम्बन्धवन्निरूपित-शक्तिमत् ताद्दशानुपूर्व्व्यवच्छिन्नं नाम ताद्दशार्थे लक्षकं। तथा च गङ्गादि-पद-जन्य-गङ्गातीरान्वय-बोधं प्रति तीराशक्तत्वविशिष्ट-गङ्गापदविशेष्यक-तीरसम्बन्धि-शक्तत्वप्रकारक-ज्ञानं हेतुरिति भावः। "शक्तिविधुरे"त्यस्य प्रयोजनमाह "सैन्धवादय" इत्यादिना।

बोधयन्तीति तत्र ते लक्षका एव। शक्तत्वे पूर्व्वपूर्व्व-प्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् (क)। कथञ्चित्तीरादि-(ख) सम्बन्धित्वेन गृहीतादपि गङ्गादि-पदात्तीरादेरन्वयाबोधेन (ग) तीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा, गङ्गागङ्गायां (घ) घोष इत्यादावपि गङ्गागङ्गेति-भागस्य निरुक्त-लक्षणायाः सत्त्वेन (१) वैयर्थ्याभाव-(ङ) प्रसङ्गाच्च। एतेन (च) तीराद्यशक्तत्वे सति

---

(१) सम्भवेनेति क्वचित्पाठः।

---

(क) "लक्षका एवे"त्येवकारव्यवच्छेदं युक्त्या व्यवस्थापयति "शक्तत्व" इत्यादिना "तस्य" शक्तत्वस्येत्यर्थः, "तद्व्याप्यत्वात्" पूर्व्व-पूर्व्व-प्रयुक्तत्व-व्याप्यत्वादित्यर्थः। एतच्च पूर्व्वमेवोक्तं पृः ३३ पः २।

(ख) कारिकास्थ-शक्तमित्यस्य व्यावृत्तिमभिदधान एव चिन्तामणिकृन्मतं दूषयति "कथञ्चित्तीरादी"त्यादि। "कथञ्चित्" कालिकादि-सम्बन्धित्वेनेत्यर्थः।

(ग) "अन्वयाबोधेन" अन्वयबोधाननुभवेनेत्यर्थः। "तत्-सम्बन्धिता" तीरादिसम्बन्धितेत्यर्थः।

(घ) निरुक्ताननुभवे विप्रतिपन्नं प्रत्याह "गङ्गागङ्गाया"मित्यादि।

(ङ) "वयर्थ्याभावे"ति शाब्दाजनकत्वाभावेत्यर्थः अस्मन्मते तादृशभागस्य वृत्ति-विरहेण शाब्दाजनकत्वरूप-वैयर्थ्य-सम्भवादिति भावः।

(च) ननु तत्सम्बन्धितामात्रमनिवेश्य तत्परत्वं तदनुभावकत्वं वा तत्र निवेश्यं तथा च गङ्गागङ्गायामिति-भागस्य तीरपरत्वाद्यभावान्न लक्षकत्वापत्तिरित्यतस्तदपि दूषयति "एतेने"-त्यादिना। "एतेन" वक्ष्यमाण-दोषेणेत्यर्थः। अत्र तत्परत्वं यदि तत्प्रतीतीच्छयोच्चरितत्वं तदोक्तस्थल-वारणासम्भवः गङ्गागङ्गायामित्यस्यापि तीर-प्रतीतीच्छयोच्चरितत्व-सम्भवादित्यत आह "तीरादिसम्बन्ध्यनुभावकत्व"मिति। न च तीराद्यनुभावकत्वमित्युक्त्याऽपि तद्वारण-सम्भवेन सम्बन्ध्यंश-निवेशनमफलमिति वाच्यं तीराद्यन्वयबोधात् पूर्व्वं तद्ग्रहासम्भवादिति। "वृत्तिमत्त्व-स्यैव तन्त्रत्वा"दिति अत्र च वृत्तिमत्त्वं सङ्केत-लक्षणान्यतरात्मक-वृत्तिग्रहोपयोग्यानुपूर्व्वीमत्तया व्याकरणपरिगृहीतत्वं एवञ्चापभ्रंशाद्यनुकरणस्य हुं-फड़ादिस्तोभस्य वा सङ्केत-लक्षणात्मकवृत्ति-विरहेऽपि न साधुत्व-हानिः, तस्य तदुत्तरवर्त्तीति-शब्द-वृत्ति-ग्रहोपयोग्यानुपूर्व्वीमत्तया व्याकरण-परिगृहीतत्वात्, एवं चैत्रादिनाम्नामाधुनिक-सङ्केतवत्त्वेन तत्तदर्थेषु प्रकृतिप्रत्ययविभागकल्पनया व्याकरणपरिगृहीतत्वात् साधुत्वं, पारसीकादि-शब्दानाञ्चाधुनिकसङ्केतवत्त्वेन प्रकृत्यादि-विभाग-

तीरादि परत्वं तीरादि-सम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्तं, अपभ्रंशस्यापि लक्षकत्वापत्तेः। न चेष्टापत्तिः, शक्ति-लक्षणा-न्यतर-वृत्तिमत्त्वे तस्य साधुत्वापत्तेः, पद-साधुतायां वृत्तिमत्त्वस्यैव तन्त्रत्वात्। (क) किञ्चानुभावकत्वं यद्यनुभवस्योपधायकत्वं तदा घोषादि-पद-साकाङ्क्षस्य गङ्गादि-पदस्य तीर-लक्षकता न स्यात्, तेन तीर सम्बन्धिनो नीरस्यानुभवानर्जनात्, स्वरूपयोग्यत्वन्तु गङ्गाया-मिति-वाक्यस्य दुर्व्वारं तस्याप्याधेयता-धर्म्मिक-नीरानुभवं प्रति नीरा-र्थकनामोत्तर-सप्तमीत्वेन तथात्वात् (ख) नीराधेयत्वस्य च तीर-सम्बन्धित्वानपायात्।

ननु (ग) वाक्यमपि लक्षकं भवत्येव, कथमन्यथा चित्रगु-समु-दायस्य लक्षणया चित्रगो-स्वामिनां वोधः? कथं वा गभीरायां नद्यां घोष इत्यादौ गभीर-नदी-तीरस्य (घ)? न हि तत्र नदी-पदं तीर-लक्षकं, गभीरायामित्यस्यानन्वयापत्तेः, न हि तीरं गभीरं। नाऽपि गभीर-पदं तथा (ङ), नद्यामित्यस्यानन्वयापत्तेः (१),

---

(१) अयोग्यतापत्तेरिति क्वचित्पाठः।

---

कल्पनया व्याकरणापरिगृहीतत्वादसाधुत्वञ्चेति भावः। नन्वेवं व्याकरणापरिगृहीतत्वरूप-साधु-त्वस्य निरुक्त-वृत्तिमत्त्वव्याप्यतयात्माश्रयादिरिति चेन्न शब्दान्वाख्यायक-व्याकरण-प्रवाहस्यानादि-त्वात्, तथा चोक्तं शक्तिवादे मणिकृता "पूर्व्व-पूर्व्व-व्याकरणेन साधुत्वमवगम्योत्तरोत्तर-व्याकरणेन व्युत्पादनमित्युक्तत्वा"दिति।

(क) पद-साधुत्वे शक्तिमत्त्वं तन्त्रं न तु वृत्तिमत्त्वं, तथा चापभ्रंशस्य लक्षकत्वेऽपि न साधुत्व-सम्भव इत्युक्तावपि दोषान्तरमाह "किञ्चे"त्यादिना।

(ख) "तथात्वात्" स्वरूपयोग्यत्वादित्यर्थः।

(ग) दूषिते मणिकृन्मते मीमांसकः शङ्कते "नन्वि"त्यादिना "मीमांसका" इत्यन्तेन पृः ६२, पः २।

(घ) बोध इति शेषः।

(ङ) "तथा" तीरलक्षकमित्यर्थः।

न हि तीरं नदी। तस्माद्वाक्यमेव तत्र गभीर-नदी-तीर-लक्षकमिति मीमांसकाः। तत्र गभीरायां नद्यामिति विभक्त्यन्त-भागस्य तादृश-तीर-( क ) लक्षकत्वे घोषादावाधेयत्वेन तदन्वयानुपपत्तेः, समासादन्यत्र ( ख ) नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। एतेन ( ग ) तादृश-तीर-वृत्तितायामेव तद्भागस्य लक्षणयापि न निस्तारः। ( घ ) तादृश-तीर-वृत्तेश्च लक्ष्यत्वे घोषादावभेदेन तदन्वयायोगात्, ( ङ ) समास-भिन्न-स्थले नामार्थयोरभेदान्वये नाम्नोः समान-विभक्तिकत्वस्य तन्त्र-त्वात्। न च गभीरायां नदीति भागस्यैव तादृश-तीर-लक्षकत्वं, तदर्थे विभक्त्यर्थस्यानन्वयापत्तेः, ( च ) न हि स भागः प्रकृतिर्येन तदर्थे विभक्त्यर्थस्यान्वयः स्यात्, ( छ ) गभीरायां नदीं व्रजेत्यादितोऽपि गभीर-नदी-तीर--कर्म्मकत्वादि--बोधापत्तेस्तद्भागस्य ( ज ) वाक्या-

---

( क ) "तादृशतीर" गभीर-नदी-तीरेत्यर्थः। "आधेयत्वेन" आधेयतासम्बन्धेनेत्यर्थः।

( ख ) समासस्थले राजपुरुष इत्यादौ भेदान्वय-स्वीकारादाह "समासादन्यत्रे"ति। "नामार्थयो"रिति अत्र नामपदं निपात-प्रत्ययान्यतर-भिन्न-परं, तेन नामार्थ-धात्वर्थयोरपि भेदेन नान्वय-बोधः। एवञ्च गभीरायां नद्यामित्यस्य नामत्वाभावेऽपि न क्षतिः।

( ग ) समासादन्यत्रेत्यादि-नियमानुरोधेनेत्यर्थः।

( घ ) आधेयत्वे लक्षणा-पक्षे दोषमुक्त्वा आधेये लक्षणा-पक्षेऽपि तमाह "तादृशतीरे"-त्यादिना।

( ङ ) अयोगे हेतुमाह "समासे"त्यादि नीलघट इत्यादि कर्म्मधारयस्थले अभेदान्वय-दर्शनादाह "समासभिन्ने"त्यादि।

( च ) "न हि स भागः प्रकृति"रिति प्रकृति-लक्षणाश्रयः, तादृश-तीर-वृत्त्याधेयत्व-बोधे सप्तमी-विभक्ति-धर्म्मिक-गभीरायांनदीति-भाग-निश्चयत्वेन हेतुताया अप्रामाणिकत्वेन "स्वोप-स्थाप्यपदर्थस्येत्यादि-पृः १७ पः ५ प्रकृति-लक्षणस्य तत्रागमनादिति भावः। "विभक्त्यर्थस्ये"ति, अत्र विशेष्यतयेति पुरणीयम्।

( छ ) विभक्ति-धर्म्मिक-तादृश-शब्द-निश्चयत्वेन हेतुत्वमङ्गीकृत्य कण्ठेकालेत्यादेरिव गभीरायां नदीति-भागस्यापि यदि प्रकृतित्वं स्वीक्रियते तदाप्याह "गभीरायां नदी"मित्यादि।

( ज ) "तद्भागस्य" गभीरायां नदीति-भागस्येत्यर्थः। भवता वाक्ये लक्षणा स्वीक्रियते

दन्यत्वाच्च। तस्माद् गभीरा-पदं नदी-पदं वा तत्र गभीर-नदी-तीर-लक्षकं, पदान्तरन्तु तत्र तात्पर्य्य-ग्राहकमिति सिद्धान्त-विदः।

(क) चट-चटाद्यनुकरणस्य हुं फड़ादि-स्तोभस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्ति-भ्रमादेव। गौर्वाहीक इत्यादौ तु शक्यार्थ-

---

तादृश-भागस्य तु वाक्यत्वमपि नास्तीत्याह "वाक्यादन्यत्वाच्चे"ति मिथोनिराकांक्षत्वेन वाक्य-लक्षणाक्रान्तत्वाभावादिति भावः।

(क) ननु सार्थक-घटपटादि-शब्दानुकरणानां घट-पटेत्याद्यानुपूर्व्वीकाणां शक्य-वाचकत्व-सम्बन्धवत्तया स्व-स्वरूपे लाक्षणिकत्व-सम्भवेऽपि निरर्थकानां चटचटाद्यनुकरणानां हुं-फड़ादि-स्तोभानाञ्च शक्यार्थाप्रसिद्ध्या लाक्षणिकत्वासम्भवस्तथा च कथं तेभ्यः स्व-स्व-रूपानुभवः? न च स्वरूपे तेषां शक्तिः कल्पनीयेति वाच्यं ईदृश-शब्दानुकरणस्थले प्रायश इति-शब्द-प्रयोग-दर्शनेन तच्छक्त्यैव पूर्व्वप्रक्रान्तानुपूर्व्वीकाणामुपस्थिति-सम्भवात् गौरवेणोक्तानुकरणानां शक्तेरकल्पनात्। एवञ्च कथं इति-शब्दासमभिव्याहृतात् चटचटादि-शब्दात् हुं-फड़ादि-स्तोभाच्चार्थ-प्रतिपत्तिः कथं वा नाम्नश्चातुर्व्वि[illegible]-विभागस्योपपत्तिस्तेषामेव धातुप्रत्ययनिपातभिन्नत्वे सति स्वरूप-प्रतिपादकत्वेन नामत्वस्यैवाङ्गीकर्त्तुमुचिततया स्वस्य स्व-घटकस्य वा शक्ति-लक्षणयोरभावेन निरुक्तरूढ़ादि-विभागेष्वनन्तर्भावादित्याशङ्कायां तेषां शक्तिभ्रमेण स्वरूपानुभावकत्व-प्रतिपादनमुखेन सार्थकत्वाभावं प्रदर्शयति "चटचटाद्यनुकरणस्ये"त्यादिना, अत्रानुकरणत्वं स्व-सजातीय-शब्दमात्रबोध-तात्पर्य्यकोच्चारण-विषयत्वं, अनुकार्य्यत्वञ्च स्व-सजातीय-शब्द-प्रतिपाद्यत्वे सति शब्दत्वं, उभयत्रैव स्व-पदं लक्ष्यत्वेनाभिमतपरं, साजात्यञ्च स्ववृत्त्यानुपूर्व्वीमत्त्वेन; "स्तोभानां" मन्त्रैकदेश-विशेषाणामित्यर्थः। "अपभ्रंशानामिवे"ति यथापभ्रंशानां शक्तिभ्रमात् शाब्दबोधजनकत्वं तथा निरर्थक-शब्दानुकरणानामपि। ननु विनिगमनाविरहेण साधुशब्दवदपभ्रंशनामपि शक्ति-प्रमात एव शाब्द-बोधजनकत्वमस्तु तथा च दृष्टान्तासङ्गतिरिति चेन्न देशभेदेऽप्यभिन्नतया संस्कृताभिध-साधु-शब्दानामेव शक्ति-कल्पने लाघवात् देशभेदे विभिन्नानामपभ्रंशानां तत्कल्पने गौरवाच्च न विनिगमनाविरहो न वा दृष्टान्तासङ्गतिः। तथा च संस्कृतशब्देष्वेव शक्तिर्न त्वपभ्रंशादिष्विति न्याय-सिद्धान्तः। अथापभ्रंशेषु कस्याः शक्तेर्भ्रमात् शाब्दबोध इति चेदत्रोच्यते साधुशब्द-निष्ठायाः शक्तेरपभ्रंशेषु भ्रमादेव साधुशब्दमजानतामन्वय-बोधस्तं जानताञ्चापभ्रंश-स्मारित-साधुशब्देषु शक्ति-प्रमात एवेति। अत्रायं क्रमस्तथा हि, केनचित् गौरिति प्रयोक्तव्ये प्रमादात् गावीति-शब्दे प्रयुक्ते व्युत्पन्नस्तेन गो-शब्दमुन्नीय ततो गां प्रतीत्य गामानीतवान्, तथा चोक्तं पूर्व्वाचार्य्यैः "अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते। अव्यक्तं तद्विदां तेन व्यक्तं भवति निर्णय" इति। पार्श्वस्थश्च बालको गावी-शब्दादेवार्थं गां प्रतीतवानित्यवगम्य गावी-शब्दमेव गो-शक्ततया

सदृशत्वावच्छिन्न-बोधकतया गौणं गवादि-पदं गो-सदृशादौ लक्षक-मेवास्तु, न तु ततो भिद्यते।

(क) स्यादेतत्, मुखं विकसित-स्मितमित्यत्र विकसित-पदेन विस्तृतार्थ-लक्षणया मुखस्य प्रकटित-स्मितवत्तामनुभाव्योत्तर-कालं कुसुम-तुल्य-सौरभादिमत्त्वं तस्य लक्षणा-मूलक-व्यञ्जनया वृत्त्या

---

स्थिरीकुर्व्वन्नन्येषां व्युत्पादको यदा बभूव, ततः प्रभृत्यपभ्रंशेषु शक्तताया भ्रमः। एवं निरर्थक-शब्दानुकरणस्थलेऽपि केनचित् चटचटेति उच्चार्य्यतामिति प्रयोक्तव्ये प्रमादात् चटचट उच्चार्य्यता-मिति प्रयुक्ते व्युत्पन्नस्तेन चटचटोत्तरमिति-शब्दमुन्नीय ततश्चटचट-शब्दं प्रतीत्य चटचट-शब्दमुच्च-रितवान् पार्श्वस्थश्चाव्युत्पन्नो-बालकश्चटचटशब्दादेवायं चटचटशब्दं प्रतीत्य चटचटशब्दमुच्चरितवा-नित्यवधार्य्य चटचटशब्दमेव चटचटेत्यानुपूर्व्वीमत्त्वक्ततया स्थिरीकृत्यान्यान् यदा व्युत्पादयामास ततः प्रभृत्येव निरर्थकशब्दानुकरणेष्विति-शब्द-निष्ठायाः शक्तताया भ्रम इति। एवञ्च यथा ज्ञात-साधुशब्दस्य व्युत्पन्नस्यापभ्रंश-स्मारितात्साधुशब्दात् शक्तिप्रमातोऽर्थ-संप्रत्यय-स्तन्मूलकाच्च साधु-शब्दशक्तिभ्रमादज्ञातसाधुशब्दस्य, तथा निरर्थकशब्दानुकरणस्थले-ऽप्यनुमिनेति-शब्दस्य व्युत्पन्न-स्येति-शब्द-शक्ति-प्रमातोऽर्थ-संप्रत्ययस्तन्मूलकाच्चेति-शब्द-शक्ति-भ्रमादननुमितेति-शब्दस्येति। न चेति-शब्द-समभिव्याहार-स्थलेऽनुकरण-वैयर्थ्यमिति-शब्दस्यैव तदुपस्थापकत्वादिति न शंक्यं, इति-शब्दस्य प्रकारत्ववाचित्वेन अनुकरणशब्दं विना विशेष-बोधकत्वासम्भवात्। एवञ्च निरर्थक-शब्दानुकरणस्थले इति-शब्दशक्तिग्रहोपयोगितयापभ्रंशादेरपि प्रयोगः साधुरेव, अतएव कातन्त्र-पञ्जिकायां विलोचनैरभिहितं "यदशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते यथा अह्नो ऋतकमानयेति प्रयोक्तव्ये शक्ति-वैकल्यात्प्रमादाद्वा अह्नो लृतकमानयेति केनचित् प्रयुक्तं, तत्समीपवर्त्ती किमयमाहेत्यपरेण पृष्टः सन्ननुकुर्व्वन्नह्नो लृतकमानयेत्याह इति कथयति अत्र च लृकारस्य स्वर-संज्ञया ओदन्ता अ इ उ आ निपाता इत्यादिना ओकारस्य स्वरे प्रकृति-र्भवतीति।" एवञ्च निरर्थकशब्दानुकरणादीनां सार्थकत्वाभावेन नामत्वासम्भवान्न नाम्नो निरुक्त-विभागस्यानुपपत्तिरिति, सार्थकानुकरणस्य तु शक्तिसत्त्वेन लक्षणाया अपि सम्भवात्तत्र लक्षणयैव स्वरूपानुभावकत्वं न तु शक्त्या, नानार्थताप्रसङ्गादेवञ्च सार्थकानुकरणस्थले इति-शब्दं विनाप्य-भानस्यान्वयबोध इत्यभिप्रेत्य "चः शब्द" इति पृः २२ पः १६ ग्रन्थकृता प्रयुक्तमिति. सुधीभि-र्विवेचनीयम्।

(क) व्यञ्जनाद्वयोरालङ्कारिकसम्मतयोर्लक्षणामूलां तां दूषयितुमुपन्यस्यति "स्यादेत" दित्यादिना "वदन्तो"त्यन्तेन पृः ६५, पः ५। "विकसिते"ति विपूर्व्व-कस-धातोः पुष्प-विकाशने शक्तिर्विस्तारे लक्षणेति।

बोध्यत इति रूढ़ादिवद् व्यञ्जकमपि शब्दान्तरमास्थेयं। न हि तत्र विकसितादि-पदं कुसुम-सदृशादौ रूढमसङ्केतितत्वात्, नाऽपि यौगिकं स्वावयव-वृत्त्या तदप्रापकत्वात्, न वा लक्षकं उपस्थितार्थान्वयानुपपत्ति-धी-रूपस्य लक्षणा-बीजस्य तत्रासत्त्वादित्यालङ्कारिकास्तत्र वदन्ति। (क) तत्र अन्वयानुपपत्तेर्लक्षणा-बीजत्वं न तज्जनकत्वं शक्य-सम्बन्धात्मिकाया (१) लक्षणायास्तदजन्यत्वात्, नापि तज्ज्ञापकत्वं मुख्यार्थान्वयानुपपत्ति-ज्ञानमन्तरेणापि प्रमाणान्तरेण (ख) तद्ग्रह-सम्भवात्। (ग) अत एव न लक्ष्यार्थ-तात्पर्य-ग्राहकत्वमपि, प्रकरणादितोऽपि लक्ष्यार्थ-परत्व-ग्रहात्। न च लक्षणा-जन्यान्वय-बोधं प्रति तस्याः (घ) कारणत्वमिव तस्या लक्षणा-बीजत्वमिति साम्प्रतं, यष्टीः प्रवेशयेत्यादौ व्यभिचारात् (ङ) तादृश-(च) हेतुतायां प्रमाणाभावाच्च।

---

(१) शक्यसम्बन्धाद्यात्मिकाया इति क्वचित्पाठः, तत्र चैवं टीप्पनी वर्त्तते "मीमांसकमते शब्दवृत्तिः कश्चिदतिरिक्तः पदार्थो लक्षणेति सूचयितुमादिपदमिति"।

---

(क) लक्षणामूलव्यञ्जनावादिनो दोषमाह "तत्र अन्वयानुपपत्ते"रित्यादिना। "तज्जनकत्व"-मित्यत्र तत्पदं लक्षणापरम्।

(ख) "प्रमाणान्तरेण" प्रकरणादिनेत्यर्थः, केचित्तु गङ्गापदं तीरलाक्षणिकं तीरासङ्केतितत्वे सति तीरार्थकतया प्रामाणिकप्रयुक्तगङ्गापदत्वादित्याद्यनुमानादिनेत्यर्थ इत्याहुः।

(ग) "अतएव" अन्वयानुपपत्तिज्ञानं विनापि प्रकरणादिना लक्ष्यार्थपरत्व-ग्रह-सम्भवादेवेत्यर्थः।

(घ) "तस्याः" अन्वयानुपपत्तिधिय इत्यर्थः।

(ङ) "व्यभिचारात्" मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि यष्टीः प्रवेशयेत्यादौ यष्टि-धरादेरन्वयानुभवेन व्यभिचारादिति भावः।

(च) अन्वयानुपपत्तिज्ञान-विशिष्ट-लक्षणा-ज्ञान-जन्य-बोधं प्रति अनुपपत्ति-ज्ञानस्य हेतुत्वमित्युक्तौ न दोष इत्यत आह "तादृशे"त्यादि। न्यायमते लक्षणा-मूल-व्यञ्जना-स्थले लक्षणयैव तादृश-बोधः सम्पादनीय इति भावः।

(क) अथास्ति नानार्थ-शब्दैः प्रकरणादि-साचिव्यात् क्वचिदेक-विधानामर्थानामन्वय बुद्धेरनन्तरमप्यन्य-विधानामन्वयानुभवः सहृदयस्य, यथा (ख) "अयं गौरवितो महान्" इत्यादौ यथा वा "वयस्था नागरासङ्गादङ्गानां हन्ति वेदना"मित्यादौ, स चायमनुभवो (ग) न शक्ति-धी-प्रभवः शक्यार्थ-बुद्धौ तत्परत्व-ग्रहस्य तद्-ग्राहक-प्रकरणाद्यवगमस्य वा हेतुत्वेन तदसत्वात्, नाऽपि लक्षणा-प्रयुक्तः शक्यार्थं तदयोगात्, परन्त्वभिधा-मूल-व्यञ्जनयैव सम्पाद्यः, तदुक्तम्—

(घ) "अनेकार्थस्य शब्दस्य प्रस्तावाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽभिधामूल-व्यञ्जनान्यस्य बोधिका" ॥ इति

---

(क) ननु लक्षणया व्यङ्ग्यार्थबोधोपपादनसम्भवात् लक्षणा-मूल-व्यञ्जनानङ्गीकारेऽप्यभिधा-मूलावश्यमङ्गीकर्त्तव्या, अभिधामूलव्यङ्ग्यार्थ-बोधस्य शक्त्या लक्षणया वोपपादयितुमशक्यत्वादिति शङ्कते "अथे"त्यादिना । "अस्ती"त्यस्य "अन्वयानुभव" इत्यग्रिमेणान्वयः । तद्-विशेष्यक-तत्प्रकारक-शाब्द-बोधे तथाविध-शाब्द-बोधस्य प्रतिबन्धकत्वं न तु तत्पद-जन्य-शाब्द-बोधे तत्पद-जन्य-शाब्द-बोधत्वेनेति, अतः शक्त्या तत्पदजन्यैक-विध-शाब्द-बोधोत्तरं व्यञ्जनया तत्पदजन्यान्य-विध-शाब्द-बोधस्य नानुपपत्तिरिति भावः ।

(ख) "गौरवितः" पूज्यः, पक्षे गौः, "अवितो" मेषत इत्यर्थः । अथवा "अयं गौः" इदं चक्षुः, "अवितो महान्" सू॰ तो महदित्युत्प्रेक्षेति । ननु प्रथम-व्याख्यायां गौरवित इत्यस्य वाक्यत्वेन तत्र नानार्थ-पदात्ताद्दशानुभवोऽसिद्ध इत्यत आह "यथावे"त्यादि । "वयस्था" युवतयः पक्षे "वयस्था" हरीतकी "नागरं" शुण्ठी ।

(ग) "सचायमनुभवः" एकविधार्थानुभवोत्तरमन्यविधार्थानुभव इत्यर्थः । "तत्परत्व ग्रहस्य" तात्पर्य्य-ग्रहस्येत्यर्थ । तात्पर्य्यज्ञानस्य हेतुतायामसम्मतेः पूर्व्वं पृः ११ पः ६ दर्शितत्वादाह "तद्ग्राहके"त्यादि ।

(घ) "अनेकार्थस्ये"त्यादि-कारिकायां "प्रस्तावः" प्रकरणमित्यर्थः । "एकत्रार्थ" इति, एकार्थ-विषयकानुभवानन्तरमित्यर्थः, अर्थ-पदस्यार्थ-ज्ञान-परत्वात् पीते पायसि पीत इत्यादाविव सति-सप्तम्या आनन्तर्य्यवाचित्वादिति भावः ।

चेन्न (क) तात्पर्य्य-धियो हेतुत्वस्य पूर्व्वं परास्तत्वात्, अत एव प्रकरणादीनामननुगतानां क्वचिदसत्त्वेऽपि क्षत्यभावात्। (ख) वस्तुतः शक्त्याद्युपस्थितानामेक-विधानां पदार्थानामन्वय-मतेरनन्तरं येऽन्य-विधानामन्वय-बोधः स्यात्, स्यादपि तदनुरोधेन व्यञ्जना-स्वीकारः, न चैवं, तत्तदर्थक-(ग) शाब्द-सामान्यं प्रत्येव तत्तदर्थ-निस्तात्पर्य्यकत्व-धियः प्रतिबन्धकत्वात्। तत्तदर्थानां (घ) यथा-कथञ्चिदुपनयवशेन मनसैव विशिष्ट-धी-सम्भवात्, मानोरथिक-(ङ) सुख-प्रभेद-पर्य्यवसितं चमत्कारं प्रत्यपि शाब्दस्येव मानसस्यापि बोध-

---

(क) अभिधा-मूल-व्यञ्जना-वृत्तौ दोषमाह "चेन्न"त्यादिना, "पूर्व्व" शब्द-प्रामाण्य-विचारे पृः ११ पः ६। "अतएव" तात्पर्य्यज्ञानस्याहेतुत्वादेवेत्यर्थः। अत्रायमाशयः तात्पर्य्य-ज्ञानस्य हेतुत्व-सिद्धावेव लाघवादावश्यकत्वाच्चाननुगत-प्रकरणादि-ज्ञानस्यैव हेतुत्वमङ्गीक्रियते, तदसिद्धौ तु तदपि न कल्प्यते इति भावः। "क्षत्यभावा"दिति तथा च नानार्थशब्दस्थले तात्पर्य्य-ज्ञानाद्यसत्त्वेऽपि एकार्थ-बोधोत्तरमन्यार्थबोधस्तात्पर्य्य-ज्ञानाद्यघटित-शक्तिज्ञान-घटित-सामग्र्यैव सम्पादनीय इति भावः।

(ख) व्यञ्जनाया वृत्तित्वमनङ्गीकृत्य शक्त्यैवैकविधार्थानां शाब्द-बोधोत्तरमन्यविधार्थानां शाब्द-बोधोपपादने बोध द्वय-यौगपद्यापत्तिरुभयोरेव शक्तिज्ञान-घटित सामग्री-जन्यत्वेनाविशेषात्। अभिधामूल-व्यञ्जना-वादिनान्तु मते शक्तिज्ञानघटित-सामग्र्या व्यञ्जनाजन्य-शाब्दबोध-प्रतिबन्धकत्व-कल्पनान्न यौगपद्य-सम्भव इत्यत शक्तिज्ञानजन्यैकार्थ-विषयकतादृश-बोधोत्तरमन्यार्थ-शाब्दबोधस्ये-वासिद्धिमाह "वस्तुत" इत्यादिना। "न चैवं" तादृश-शाब्दबोधो भवतीत्येव नेत्यर्थः।

(ग) "नचैव"मित्यत्र हेतुमाह "तत्तदर्थके"त्यादिना। "प्रत्येवे"त्येव-कारेण मानस-ज्ञान-व्यवच्छेदस्तथा च न तु मानसं प्रतीत्यर्थः।

(घ) अन्यविधार्थानां शाब्दबोधमनङ्गीकृत्याऽपि विशिष्टार्थ-बोधमुपपादयति "तत्तद-र्थाना"मित्यादिना। तथा च निस्तात्पर्य्यकत्वाग्रह-स्थलेऽन्यत्र यादृश-सामग्रीतो मानस-बोधस्तदग्रह-स्थलेऽत्रापि तादृश-सामग्रीत एव मानसबोधस्य सम्भवान्नातिरिक्ताया व्यञ्जनाया वृत्तेः स्वीकरणं युक्तमिति न्यायविदामभिप्रायः।

(ङ) चमत्कारं प्रति शाब्दस्येव मानसबोधस्य हेतुत्वेऽपि न क्षतिरित्याह "मानोरथिके"-त्यादि।

विशेषस्य हेतुतायाः सुवचत्वात्। (क) व्यञ्जनाख्य-पदार्थान्तरस्य स्वरूप-सत्तया अन्वय-बुद्धौ तद्धेतुत्वस्य च प्रमाण-विरहेणासत्वाच्चेति संक्षेपः॥ २४॥

लक्षकं नाम विभजते।—

(ख) जहत्-स्वार्थाऽजहत्-स्वार्थ-निरूढाधुनिकादिकाः।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा॥ २५॥

काचिल्लक्षणा शक्याप्रवृत्ति-रूपेण वोधकतया जहत्स्वार्थेत्युच्यते यथा तीरत्वादिना गङ्गादि-पदस्य। काचिच्छक्य-लक्ष्योभय-वृत्तिना शक्य-वृत्तिनैव वा रूपेणानुभावकत्वादजहत्-स्वार्था यथा द्रव्यत्वादिना नील-घटत्वादिना च घट-पदस्य। काचिल्लक्ष्यतावच्छेदकीभूत-तत्त-द्रूपेण पूर्व्वं पूर्व्वं [illegible]न्निरूढा यथा आरुण्यादि-प्रकारेण तदाश्रय-द्रव्यानुभावकत्वादरुणादि-पदस्य। काचिच्च पूर्व्वं पूर्व्वं

---

(क) ननु तादृश-मानसस्येव शाब्दस्यापि तादृश-चमत्कारहेतुत्वे वाधकाभावस्तथा च चमत्कारहेतुत्वेन शाब्दसिद्धौ तद्धेतुतया व्यञ्जनापि स्वीकर्त्तव्येत्यतस्तस्यां तद्धेतुतायाञ्च प्रमाणाभावमाह "व्यञ्जने"त्यादिना। "पदार्थान्तरस्य" अतिरिक्तपदार्थस्येत्यर्थः। अस्य "प्रमाण विरहेणे"त्यनेनान्वयः। अतिरिक्त-व्यञ्जनायां तस्या अज्ञाताया हेतुत्वे च प्रत्यक्षादि-प्रमाणाभावेनेत्यर्थः। अत्रायमभिप्रायः, अत्र व्यञ्जनायां प्रत्यक्षं तावत् न प्रमाणं, तस्या इन्द्रियायोग्यत्वात्। नाप्यनुमानं लिङ्गाभावात् शाब्दवोधरूपलिङ्गस्याप्यसिद्धत्वाच्च। नाप्युपमानं तस्य शक्तिमात्रग्राहकत्वात्। नापि शब्दः शक्तिग्राहकाभावात्। एवञ्च तस्या असिद्धौ तया सममन्वयव्यतिरेकयोर्ग्रहासम्भवेन तस्याः स्वरूपसत्याः शाब्दहेतुत्वस्याप्यसम्भवः, एवं स्वरूपसत्या व्यञ्जनायाः शाब्दहेतुत्वे सर्व्वत्रैव व्यङ्ग्यार्थ-वोधापत्तिश्च, ज्ञातायां हेतुत्वञ्च न तदङ्गीकृदालङ्कारिक-सम्मतं सम्मतत्वे शक्तौ लक्षणायां वान्तर्भाव-प्रसङ्गात्, पूर्व्वोक्तयुक्त्या कारणाभावेन तज्ज्ञानस्यासम्भवाच्चेति मनसि कृत्य "स्वरूप-सत्तये"त्याद्यभिहितं।

(ख) जहन् (शाब्दवोधविषयत्वं त्यजन्) स्वार्थः (स्वाश्रयशक्यः) यस्या सा जहत्-स्वार्था, सं लक्षणा। अथ वा जहति पदानि स्वार्थं (स्व-शक्यार्थं) यस्यामिति विग्रहे जहत्-स्वार्थेति वहुव्रीहिरिति। केचित्तु जहत् स्वं (पदं) यं (अर्थं विषयं वा) स जहत्-स्वो विषयः स एवार्थो (विषयः प्रतिपाद्यो वा) यस्या वृत्तेः सा जहत्स्वार्थेति, एवमुक्तरीत्यैवाजहत्स्वार्थेत्यत्रापि विग्रहोऽवगन्तव्य इति।

तादूप्येणाप्रत्यायकत्वादाधुनिकी यथा घटत्वादिना पटादि-पदस्य। भादिना शक्य-सदृशत्व-प्रकारेण वोधकतया गौण्युपगच्छति यथा अग्नि-र्माणवक इत्यादावग्नि-सदृशत्वादिना अग्न्यादि-पदस्य। (क) तदेवं विविध-लक्षणावत्त्वाल्लक्षकं नामाऽपि जहत्-स्वार्थादि-भेदादनेक-विधं।

स्यादेतत् (ख) यदि तीरादि-लक्षकतया गङ्गादि-पदस्य ज्ञानं तीराद्यनुभवे भवेद्धेतुर्भवेदप्युक्त-क्रमेण लक्षकाणां विभागः, न त्वेतदस्ति, तीराद्यन्वय-वोधं प्रति तीरादि-शक्तत्वेनैव पद-ज्ञानस्य लाघवेन (ग) हेतुतया लक्षकाणामननुभावकत्वात्। (घ) गुरूणा-मग्नौ शैत्यं स्पृशेदित्यादौ शक्येन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना सार्द्धमगृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वादे-रन्वय-वोध-प्रविष्टत्वादिति चेन्न प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्म्यन्तरेऽन्वय-बुद्धेर्व्युत्पन्नतया तीराद्यविशेषितस्य सुबर्थाधेयत्वादे-र्घोषादावन्वय-वोधायोगात्। न च शक्त-पदस्यैव (१) स्व-(ङ) साकाङ्क्ष-पदान्तरोपस्थाप्यार्थान्वित-स्वार्थ-धर्म्मिकान्वय-वोधं प्रति

(१) शक्तस्यैव पदस्येति हस्त-लिखित-पुस्तके।

(क) कारिका-शेषार्द्धं व्याकरोति "तदेव"मित्यादिना।

(ख) लाक्षणिकस्याननुभावकत्वाल्लाक्षणिकं नामैव नास्तीति कस्य विभाग इत्याशङ्कते "स्यादेत"दित्यादिना।

(ग) शक्त्यतिरिक्त-वृत्त्यनङ्गीकार-रूप-लाघवेनेत्यर्थः।

(घ) ननु लाक्षणिकस्याननुभावकत्वे गङ्गायां घोष इत्यत्र घोषादौ तीराधेयत्व-प्रत्ययो न स्यादि"त्यत आह "गुरूणा"मित्यादि। भमानङ्गीकर्तृणां गुरूणां मत इत्यर्थः। तथा च तन्मते यथा अग्नौ शैत्यं स्पृशेदित्यवागृहीतासंसर्गक-वोध एवाङ्गीकृतस्तथा गङ्गायां घोष इत्यादावपि अगृहीतासंसर्गक-तीर--शक्तत्वेन गङ्गा--पद ग्रहादगृहीतासंसर्गक-तीराधेयत्व--प्रकारक-घोषादे-रन्वय-वोधो न तु वैशिष्ट्यावगाहीति भावः। "स्पृशे"दित्यनेन विध्यसमभिव्याहृतत्वं निराकृतं, अन्यथा तस्यार्थवादतया श्रुतगामेवाननुभावकत्वात् दृष्टान्तता न सम्भवतीति भावः।

(ङ) "स्वं" शक्त-पदं।

हेतुत्वादन्वय-बुद्धौ लक्ष्यार्थस्य प्रवेशः ( क ), कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्त-धरादेरन्वय-विशेष्यत्वानुपपत्तेः। ( ख ) कुमतिः पशु-रित्यादौ लक्ष्यार्थयोर्मिथोऽन्वय-बोधस्याप्यानुभाविकत्वाच्च। तस्मा-च्छक्तेरिव ( ग ) भक्तेरपि ज्ञानमनुभावकं भवत्येव, कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः॥ २५॥

योगरूढं नाम लक्षयति—

स्वान्तर्निविष्ट-शब्दार्थ-स्वार्थयोर्बोधकृन्मिथः।

योगरूढं ( घ ) न यत्रैकं विनान्यस्यास्ति शाब्द-धीः॥ २६॥

यन्नाम स्वावयव-वृत्ति-लभ्यार्थेन समं स्वार्थस्यान्वय-बोधकृत् तन्नाम योगरूढं यथा पङ्कज-कृष्णसर्पाधर्म्मादि, तद्धि स्वान्तर्नि-विष्टानां पङ्कादि-शब्दानां वृत्ति-लभ्येन पङ्क-जनि-कर्त्रादिना समं स्व-शक्यस्य पद्मादेरन्वयानुभावकं। पङ्कजमित्यादितः पङ्क-जनि-कर्त्तृ पद्ममित्यनुभवस्य सर्व्वसिद्धत्वात्। ( ङ ) इयांस्तु विशेषो यद्रूढमपि

---

( क ) "प्रवेशः" भानमित्यर्थः। तथा च घोष-पदमेव स्व-साकाङ्क्ष-गङ्गा-पदोपस्थाप्य-तीरान्वित-घोषादि-विशेष्यकास्तित्वान्वय-बोधे हेतुरिति भावः।

( ख ) कुन्ताः प्रविशन्तीत्यादौ कुन्तविशिष्टस्य भानानङ्गीकारेऽपि दोषान्तरमाह "कुमति"-रित्यादि। वस्तुतस्तु विशेष्यत्वमनिवेश्य शक्तपदस्य स्व-साकाङ्क्षपदोपस्थाप्यार्थविषयतानिरूपित-स्वार्थविषयताशालि-बोधं प्रत्येव हेतुत्वं वाच्यमित्यत आह "कुमति"रित्यादि। अतोभयोर्ला-क्षणिकत्वेन शक्तपदाभावादिति भावः। कुमतिपदस्य कुमतिविशिष्टे पशुपदस्य च पशुतुल्ये लाक्षणिकत्वादिति भावः।

( ग ) "भक्ति"र्लक्षणा। "सङ्कोचात्" कार्य्यतावच्छेदके अव्यवहितोत्तरत्व-निवेश-रूप-सङ्कोचादित्यर्थः। तथा च शक्तिज्ञानाव्यवहितोत्तर-शाब्दबोधे शक्ति-ज्ञानं लक्षणाज्ञानाव्यवहितो-त्तर-बोधे च लक्षणा-ज्ञानं हेतुरिति "न व्यभिचारः" न कार्य्यकारणभाव-व्यभिचार इत्यर्थः।

( घ ) अवयवार्थं परित्यज्य समुदायार्थस्य समुदायार्थं परित्यज्यावयवार्थस्य वा यादृश-शब्देन बोधो न जायते तादृश-शब्द एवैतल्लक्षण-लक्ष्य इति "न यत्रैक"मित्यादिना ध्वनितं।

( ङ ) "न यत्रैक"मित्यादि-कारिका-प्रतीकं व्याकरोति "इयांस्त्वि"त्यादिना। "रूढ्य-र्थस्य" घटत्व जातिविशिष्टस्येत्यर्थः "योगार्थस्य" मण्डपानकर्त्तृ्रथकर्त्तुश्चेत्यर्थः। "न त्वन्यं" न तु अवयववृत्त्या रूढ्यर्थान्यं रूढ्या वा समुदाय-शक्तिलभ्यान्यमनुभावयतीत्यर्थः। तथा च शक्त्या-

मण्डप-रथकारादि-पदं योगार्थ-विनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थ-विनाकृतस्यापि योगार्थस्य बोधकं, मण्डपे शेते इत्यादौ योगार्थस्य मण्ड-पान-कर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहा-देरयोग्यत्वेनान्वयाबोधात्। योगरूढ़न्तु पङ्कजादि-पदमवयव-वृत्त्या रूढ्यर्थमेव (१) समुदायशक्त्या चावयवलभ्यार्थमेवानु(२)भाव-यति, न त्वन्यन्यं (क) व्युत्पत्ति-वैचित्र्या-(३) त्तथैव साकाङ्क्ष-त्वात्। अतएव (ख) "पङ्कजं कुमुदमित्यत्र पङ्क-जनि-कर्त्तृत्वेन भूमौ पङ्कजमुत्पन्नमित्यादौ च पद्मत्वेन पङ्कज-पदस्य लक्षणयैव कुमुद-स्थलपद्मयोर्बोध" इति वार्त्तिकम्।

ननु पुष्पं पङ्कजेत्यादौ पद्मजातत्वादेरन्वयस्याबोधात् बोधाच्च पङ्कज-पुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादि-पदेनोपस्थाप्यार्थस्यान्वयधी-सामान्यं प्रत्येव तादृश-पङ्कजादि-पदोत्तर-शब्दोपस्थाप्यत्वं एवं पुष्पं पङ्कजमित्यादौ अन्वय-बोध-दर्शनात्तदनुरोधेन सविभक्तिक-पङ्कजादि-पदोपस्थाप्यार्थान्वय-बोधं प्रति स्व-समान-विभक्तिक-पदोपस्थाप्यत्वञ्च

(१) रूढ्यर्थमिवेति क्वचित्पाठः।

(२) लभ्यमेवार्थमन्विति क्वचित्पाठः।

(३) वैचित्र्येणेति क्वचित्पाठः।

समुदाय-शक्यान्याबोधकत्वमपि लक्षणविशेषणं, रथकारादिपदस्यावयवशक्त्येन समं समुदाय-शक्यस्यान्वयबोधजनकत्वेऽपि तस्य समुदाय-शक्यान्याबोधकत्वाभावादेव नातिव्याप्तिरिति।

(क) "नत्वन्य"मित्यत्र हेतुमाह "व्युत्पत्तिवैचित्र्या"दित्यादिना। "व्युत्पत्तिवैचित्र्यात्" शाब्दबोधाकाङ्क्षा-ज्ञान-कार्य्यकारणभावयोर्नानात्वादित्यर्थः। "तथैव साकाङ्क्षत्वात्" समुदाया-वयवशक्यार्थयोर्मिथो-विशेष्य-विशेषणतापन्नयोर्बोध एव पङ्कजपदे आकाङ्क्षायाः कल्प्यत्वादि-त्यर्थः। तथा च समुदाय-शक्त्या योगार्थस्यावयवशक्त्या रूढ्यर्थस्य बोधे एव पङ्कज इत्यानुपूर्वी-रूपाकाङ्क्षाज्ञानं हेतुः न त्वन्यादृशबोधे, एवञ्चाकाङ्क्षा-विरहादेव नान्यादृश बोध-सम्भवः। आका-ङ्क्षायाः फलवलकल्प्यतयान्यविध-बोधानुकूलाकाङ्क्षायास्तवाकल्पनादिति भावः।

(ख) "अतएव" पङ्कजादिपदेन शक्त्या एकशक्यार्थाविशेषितापरशक्यार्थस्याबोधनादे-वेत्यर्थः।

तत्त्वं, अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदान्तरानुपस्थापिते पद्मादावन्वय इति चेत् "अपङ्कज-वृत्तिः सत्त्वे"त्यादौ स्खलदम्बर-संयोगि तडिल्लता मुख-पङ्कजमित्यादौ च व्यभिचारादुक्त-व्युत्पत्तेः संकोचेनेति गृहाण (क)।

न च धेनु-पदस्य (ख) धान-कर्म्मत्व-विशिष्टायां गवीव पङ्कजादि-पदस्याऽपि पङ्क-जातत्वादि-विशिष्टे पद्मादौ रूढिरेवास्तु न तु योग-रूढिरिति साम्प्रतं अन्यत्र क्लृप्त-शक्तिकेभ्यः पङ्कादि-पदेभ्य (१) एवाकाङ्क्षादि-साचिव्येन पङ्क-जनि-कर्त्तृत्वादेर्लाभ-सम्भवे (२) तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्य-लभ्यस्यैव शब्दार्थत्वात् (ग)।

यद्यपि कर्त्तृ-वाचक-ड-प्रत्ययत एव पद्मत्व-विशिष्टस्य लक्षणया भान-(३) सम्भवान्न पङ्कज-भागस्य तत्र शक्तिरुचिता प्रकारान्तरा-लभ्यस्यैव शब्द-शक्यत्वमित्युक्तत्वात्, कृति-वर्त्तमानत्वयोरिवैक-पदार्थ-योरपि कर्त्तृ-पद्मयोर्मिथोऽन्वयस्य सम्भवित्वात्, तथाप्यवयवानां शक्तेर-ग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वय-धी-विरोधि-धी-दशायां (घ) पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थमवश्यं पद्मत्वादि-विशिष्टे

---

(१) पङ्कजादिपदेभ्य इति क्वचित्पाठः। क्वचिच्च पङ्कजन्यादिपदेभ्य इति पाठः।

(२) सम्भवेनेति क्वचित्पाठः।

(३) लाभ इति हस्तलिखित-पुस्तके।

---

(क) "मुखपङ्कजं" पङ्कज-सदृश-मुखमित्यर्थः। "उक्तव्युत्पत्तेः" निरुक्तकार्य्यकारण-भावद्वयस्येत्यर्थः। "सङ्कोचेन" उभयत्र कार्य्यतावच्छेदक-सङ्कोचेनेत्यर्थः। तथा च प्रथमकार्य्य-कारणभावे कार्य्यतावच्छेदके निपातातिरिक्त-शब्दान्तरार्थ-विशेष्यकत्व-निवेशरूपः सङ्कोचः, द्वितीये च कार्य्यतावच्छेदके समानविभक्तिक-नामान्तरार्थधर्म्मिकत्व-निवेशरूपः सङ्कोच इत्यर्थः। एवञ्चा-पङ्कजवृत्तिः सत्त्वेत्यत्र न प्रथमस्य मुखपङ्कजमित्यत्र च न द्वितीयस्य व्यभिचार इति भावः।

(ख) "धानकर्म्मत्वं" दोहनकर्म्मत्वमित्यर्थः।

(ग) "शब्दार्थत्वात्" शब्द-शक्यत्वादित्यर्थः।

(घ) "विरोधि-धी" र्बाधज्ञानमित्यर्थः। "ग्रहेऽपी"त्यस्य "धी-दशाया" मित्यनेनान्वयः।

पङ्कजादि-भागस्य रूढ़िरूपेया, इतरथा ( क ) प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया ड-प्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहान्वयानुपपत्तेः, अतएव ( ख ) पङ्कादि-( १ ) पदागृहीत-शक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्तास्तीत्याकारको नान्वय-बोधः, प्रत्ययमात्रोपस्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते। ( ग ) किञ्चैवमेकाक्षर-कोषावधृत-शक्तिकानां क-खादि-प्रत्येक-वर्णानामेव निरूढ़लक्षणया तत्तदर्थानुभावकत्व-सम्भवात् वक-नखादि-समुदायस्यापि तत्तदर्थे शक्तिर्विलीयेत। कादि-प्रत्येक-वर्णस्य शक्तिग्रहं विनापि वकादि-शब्दाद् वकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं। डादि-प्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादि-समुदायात् पद्मादेरनुभवस्य सर्व्व-सिद्धत्वात्।

( घ ) नचैवं चित्रगुरित्यादेरपि चित्रगो-स्वाम्यादौ समुदायस्य शक्ति-प्रसङ्गः समासत्वस्याविशिष्टत्वा-( ङ )दिति वाच्यं अगृहीता-

---

( १ ) पङ्कजादीति क्वचित्पाठः।

---

( क ) "इतरथा" पद्मत्व-विशिष्टे रूढ्यनङ्गीकारे इत्यर्थः। "ड-प्रत्ययोपस्थापितस्य पद्मस्ये"त्यतः पूर्व्वं प्रकृत्यर्थाविशेषितस्येति पूरणीयं।

( ख ) "अतएव" प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्येत्यादि-व्युत्पत्तेः प्रामाणिकत्वादेवेत्यर्थः। "पङ्कादिपदागृहीतशक्तिकस्य" पङ्क-पद-जन-धात्वित्येतयोः शक्तिमजानत इत्यर्थः। "वक्ष्यते" तत्तत्प्रकरण इति शेषः।

( ग ) प्राच्यैर्योगार्थं विना रूढ्यर्थ-बोधस्यानङ्गीकारादवयव-शक्त्याद्यग्रह-दशायां पङ्कजादिपदात्पद्ममस्तीत्याद्यनुभवस्यानङ्गीकारेऽपि दोषमाह "किञ्चैव"मित्यादिना। "एवं" कर्त्तृवाचकड-प्रत्ययस्य लाक्षणिकत्वे इत्यर्थः।

( घ ) समासशक्तिवादी शङ्कते "नचैव"मित्यादिना। "एवं" पङ्कजपदस्य समुदाय-शक्तिकल्पने इत्यर्थः।

( ङ ) पङ्कजपदस्येव चित्रगुरित्यस्यापि समासत्वाविशेषादिति भावः।

वयव-वृत्तिकस्य पुंसस्ततो-(क)-ऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थ-बोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति ॥ २६ ॥

(ख) पङ्कजादि-पदेभ्यः केवलस्यैव योगार्थस्य रूढ्यर्थस्य वा बोध-व्युदासार्थं तादृशार्थयोर्मिथः साकाङ्क्षत्व-नियमो न कल्प्यते, परन्तु रूढ्यर्थ-भिन्ने योगार्थस्य बोधं प्रति रूढ़ि-धियः प्रतिबन्धकत्वं (ग), तेन रूढेरप्रतिसन्धान-दशायामवयव-शक्त्यैव "पङ्कजं कुमुद"मित्यादौ पङ्क-जनि-कर्त्तृत्वादिना कुमुदादेरवगमः, तथावयव-शक्तेरनुपस्थितौ समुदाय-शक्त्यैव "भूमौ पङ्कजमुत्पन्न"मित्यादौ पद्मत्व-प्रकारेण स्थल-पद्मादेः (घ), अतएव (ङ) च तैल-पदं योगेन तिल-प्रभवं रूढ्या च विलक्षण-द्रव-द्रव्य-पर्य्यवसितं स्नेहं बोधयद् योगरूढ़मपि तैलं पक्व-मित्यादौ सर्षपस्य तैलमित्यादौ च शक्त्यैव प्रत्येकस्य बोधकमिति मीमांसकानां मतमुपन्यस्यति—

रूढ्यर्थ-भिन्ने योगार्थ-बुद्धौ रूढेर्विरोधिताम् ।
वदन्ति केचिदेकैक-बुद्धिस्तैः (च) क्वचिदिष्यते ॥ २७ ॥

"क्वचित्" समुदायावयवयोरेकमात्रस्य शक्ति-प्रतिसन्धान-स्थले । यद्यपि पद्मान्य-धर्म्मिक पङ्क-जातत्वान्वय-धी-सामान्यं प्रति पङ्कज-पदं पद्म-शक्तमित्येवं रूढ़ि-ज्ञानत्वेन न विरोधित्वं, तादृश-धी-सत्त्वेऽपि

---

(क) "ततः" चित्रगुरित्यादित इत्यर्थः। "तेषां" अवयवानामित्यर्थः। "तथाविधार्थः" चित्रगं स्वाम्यादि-रूपार्थ इत्यर्थः। "वक्ष्यमाणत्वा"दित्यस्य समास-प्रकरणे इति शेषः।

(ख) मीमांसकानामभिप्रायं प्रकाशयन्नवतारणिकामाह "पङ्कजादी"त्यादिना।

(ग) कल्प्यते इति शेषः।

(घ) अवगम इति पूर्व्वेणान्वयः।

(ङ) यथायथं अवयव-समुदाय-शक्तिभ्यां बोधनादेवेत्यर्थः। तैलं पक्वमित्यत्र रूढ्यर्थ-विनाकृत-योगार्थस्य सर्षपस्य-तैलमित्यत्र च योगार्थ-विनाकृत-रूढ्यर्थस्य बोध इति। "शक्त्यैव" क्वचित् अवयव-शक्त्यैव क्वचिच्च समुदाय-शक्त्यैवेत्यर्थः।

(च) "केचित्" मीमांसकाः। "तैः" मीमांसकैः।

कर्द्दम-जादि-शब्देभ्यस्तादृप्येण कुमुदादेरवगमात्, नापि पङ्कज-पद-जन्य-तादृश-बोधं प्रत्येव तथा विरोधित्वं ( क ) रूढ़ि-ज्ञान-दशाया-मपि समुदायस्य लक्षणया शक्ति-भ्रमेण वा पङ्कज-पदात् पङ्क-जातत्वेन कुमुद-बोधस्य सर्व्वैरुपगमात्। तथाप्यवयव-शक्त्या पङ्कज-पद-जन्य-पद्मान्य-धर्म्मिक-पङ्क-जातत्वान्वय-बोधं प्रत्येव निरुक्त-रूढ़ि-ज्ञानत्वेन प्रतिबन्धकत्वं। न च कुमुद एव पद्मत्वेन रूढ़ि-भ्रम-दशायां तादृप्येण ( ख ) कुमुदस्य बोधो न स्यात् विरोधिन्या रूढ़ि-धियः सत्त्वादिति वाच्यं पद्मान्यधर्म्मिकेत्यनेन पद्मत्वानव-च्छिन्न-विशेष्यताकत्वस्योक्तत्वात्। पद्मस्येव कुमुदस्यापि समुदाय-शक्यत्व-धी-दशायामवयव-शक्त्या पङ्क-जातं कुमुदमित्याकारक-धी-स्वीकारे तु ( ग ) कुमुदादि-शक्तत्व-ज्ञानाजन्यत्वेनापि प्रतिबध्यं विशेषणीयम्। न च यत्र तात्पर्य्यादि-धी-विलम्बादयोग्यता-भ्रमा-दिना( घ ) प्रतिबन्धाद्वा रूढ्योपस्थिते पद्मे योगार्थस्य पङ्क-जनि-कर्त्तु-रनन्वयस्तत्रावयव-शक्त्या पङ्कजातत्वेन कुमुदादि-बोधो न स्यात् विरो-धिनो रूढ़िज्ञानस्य सत्त्वादिति वाच्यं मीमांसकानामिष्टत्वात्, ते हि ( ङ ) मण्डपं भोजयेत्यादावपि गृहादौ रूढ़ि-धी-सत्त्वे मण्डपादि-पदानामवयव-शक्त्या मण्ड-पान-कर्त्रादेर्न मन्यन्ते बोधं, भ्रमत्व-ग्रहा-

---

( क ) "तथा विरोधित्वं" पूर्व्वोक्त-रूढ़ि-ज्ञानत्वेन प्रतिबन्धकत्वमित्यर्थः।

( ख ) "तादृप्येण" पङ्कजातत्वेनेत्यर्थः।

( ग ) इदञ्च पद्मत्वभान-प्रतिबन्धक-दशायां बोध्यं :अन्यथा तत्र पद्मत्वस्यापि-भान-सम्भवेन पद्मत्वानवच्छिन्न-विशेष्यताया एव दुर्लभत्वापत्तेः। वस्तुतस्तु तादृशरूढ़िज्ञानदशायां पङ्कजातं कुमुदमिति बोधानङ्गीकारेऽपि न क्षतिरित्यभिप्रेत्य तादृशबोधस्य सर्व्वसम्मतत्वाभाव-सूचनाय "स्वीकारेत्वि"त्युक्तं।

( घ ) ननु तात्पर्य्यज्ञानस्य हेतुत्वे मानाभावादाह "अयोग्यताभ्रमादिने"ति, पद्मं पङ्क-जनि-कर्त्तृ-भिन्नमित्ययोग्यता-भ्रमादिनेत्यर्थः।

( ङ ) "ते हि" मीमांसका हीत्यर्थः।

नास्कन्दितस्यैव ( क ) रूढ्यर्थगोचर-तत्तदयोग्यता-ज्ञानाद्यभाव-विशिष्टस्यैव रूढ़िज्ञानस्य विरोधितायाः सुवचत्वाच्च। यदि च समुदाय एव ( ख ) पद्मत्वेन पङ्क-जनि-कर्त्तृत्वेन च शक्तेः प्रमा-भ्रमाभ्यां पङ्क-जातं पद्ममित्याकारको बोधः प्रामाणिकस्तदानीं च पङ्क-जनि-कर्त्तृत्वेन कुमुदस्य नान्वय-धीः, तदावयव-शक्त्येत्यपहाय पङ्कज-पद-घटक-शब्द-शक्त्येति प्रतिबध्य-कुक्षौ निक्षेपणीयं ( ग ) तद्घटकत्वञ्चेह तद्विषयिता-व्यापक-विषयिताकत्वमात्रं तदवयव इव तत्राप्यविशिष्टम्।

यत्तु ( घ ) स्वावयव-शक्त्या पङ्कज-पद-जन्यं पङ्क-जनि-कर्त्तृत्वे-नान्वय-बोधं प्रति पद्मत्वं हेतुस्तत्र कार्य्यस्य विशेष्यत्वं तदवच्छेदकत्वं वा कारणस्य तु समवायस्तादात्म्यं वा प्रत्यासत्तिरित्यातावतैव योगार्थ-मर्य्यादया कुमुदादेर्बोध-व्युदास-सम्भवात् उक्त-क्रमेण प्रतिबन्धकतायां मानाभावः, पद्मत्वं पङ्कज-पद-प्रयोगोपाधिरिति-प्राचीन-प्रवादस्याप्यु-

---

( क ) रूढ्यर्थ-विषयकायोग्यताज्ञानदशायां पङ्कजातत्वेन कुमुदबोधस्यानुभव-सिद्धत्वे त्वाह "रूढ्यर्थगोचरे"त्यादि।

( ख ) "समुदाय एव" पङ्कजपदसमुदाय एवेत्यर्थः। "कुमुदस्य नान्वयधीः" पद्मान्ये पङ्कजातत्वान्वये रूढ़िज्ञानस्य विरोधित्वादिति भावः।

( ग ) पङ्कजपदघटकशब्दशक्त्या पङ्कजपदजन्य-पद्मान्यधर्म्मिक-पङ्कजातत्वान्वयबोधं प्रति-निरुक्तरूढ़िज्ञानं प्रतिबन्धकं तथा च निरुक्तस्थले समुदायशक्तेः प्रमाभ्रमस्थले कुमुदबोधस्य न सम्भव इति भावः। एकानुपूर्व्वीकशब्दे युगपद्वृत्तिद्वयस्य विरोधात् "यदिचे"त्यनेनास्वरसः सूचितः।

( घ ) "पद्मत्वं प्रयोगोपाधि"रिति वृद्धमीमांसकानां मतमुपन्यस्यति "यत्त्वि"त्यादिना। एतेषामयमाशयः, यथा तदादिपदेषु बुद्धिस्थत्वादिकं प्रयोगोपाधिर्न तु शक्यतावच्छेदकं तथा पद्मत्वमपि, प्रयोगोपाधित्वञ्च तत्पदाशक्यत्वे सति तत्पदजन्य-शाब्दबोध-जनक-धर्म्मविशिष्टत्वम्, न तु तादृशबोधप्रतिबन्धकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति। ननु विशेष्यता-सम्बन्धेन तादृश-बोधं प्रति समवायेन पद्मत्वस्य हेतुत्वे भाविनि पद्मे तादृश-बोधो न स्यात् न स्याच्च पद्मत्वेन कुमुदभ्रम इत्यत "स्तदवच्छेदकत्वं चे"ति, तथा चावच्छेदकतासम्बन्धेन तादृश-बोधं प्रति तादात्म्येन पद्मत्वस्य हेतुत्वान्न कोऽपि दोषः।

त्वार्थ एव पर्य्यवसानादिति तत्तुच्छं पद्माग्रहीत-शक्तिकस्यापि पुंसः पङ्क-जनि-कर्त्तृत्वेनावयव-शक्त्या कुमुदस्य बोधानुदय-प्रसङ्गात्। न चेष्टापत्तिरनुभव-विरोधात्। न च रूढ़िज्ञानकालीनमेव योगार्थस्य बोधं प्रत्युक्त-रीत्या पद्मत्वस्य हेतुत्वं तथा सति रूढ़ि-धी-दशायामपि तदसमानकालीनस्य पङ्क-जातत्वेन कुमुद-बोधस्य सामान्य-सामग्री-महिम्ना दुर्व्वारतापत्तेः, रूढ़िज्ञानासमानकालीन-तादृश-बोधं प्रति विशेषतो हेत्वन्तरस्याक्लृप्तत्वात्। (क) तत्कल्पने चातिगौरवात्।

यदपि (ख) पङ्क-जनन-कर्त्तृषु पङ्क-जादि-पदानां शक्ति-सत्त्वेऽपि पङ्कज-पदान्न तादृप्येण पद्मस्य बोधः, परन्तु पद्मत्वमात्रेण (ग), योगार्थ-मर्य्यादया (घ) पङ्क-जातत्व-प्रकारक-बोध-सामान्यं प्रत्येव पद्मत्व-विशिष्टे रूढ़ि-ज्ञानस्य लाघवेन विरोधित्वात्, पद्मान्य-धर्म्मि-कत्वादेर्गौरवेण प्रतिबध्य-कोट्यप्रविष्टत्वादतो योगरूढ़ं नामैव नास्ति, (ङ) युधिष्ठिरादि-शब्दादपि रणस्थिरत्वादिकं योगार्थं परित्यज्यैव वैजात्यादि-प्रकारेण कुन्ती-पुत्राद्यवगमात्। यदुक्त-मभियुक्तैः—

---

(क) रूढ़िज्ञानासमानकालीनबोधे रूढ़िज्ञानस्य प्रतिबन्धकत्व-कल्पने गौरवमाह "तत्क-ल्पन" इत्यादिना।

(ख) वैयाकरण-मतमुपन्यस्य दूषयति "यदपी"त्यादिना। "पङ्कजादिपदाना"मिति बहुवचन-बलात्पङ्कजेति द्वन्द्वसमासः सूचितः, तथा च पङ्कपदस्य पङ्के जनधातोरुत्पत्तौ ड-प्रत्ययस्य-कर्त्तरि शक्तिसत्त्वे ऽपीत्यर्थः। "तादृप्येण" पङ्क-जनि-कर्त्तृत्वेनेत्यर्थः।

(ग) "बोध" इति पूर्व्वेणान्वयः।

(घ) "योगार्थमर्य्यादया" अवयव-शक्त्येत्यर्थः। तथा च समुदायशक्तिग्रहदशायामवयव-शक्त्या बोध एव न भवतीति योगरूढ़नाम्नोऽभावाद्विभागोऽनुपपन्न इति भावः।

(ङ) ननु योगरूढ़ासत्त्वे युधिष्ठिरादि-शब्दात् रणस्थिरत्वादिना कुन्तीपुत्राद्यवगमो न स्यादित्यत आह "युधिष्ठिरादी"त्यादि। "वैजात्य" तत्तच्छरीरवृत्ति-जाति-विशेष-रूप-वैजात्यं, युधिष्ठिर-शरीरस्य कालभेदेन नानात्वादिति भावः।

(क) "या वृत्तिरजहत्-स्वार्था सेयमत्रोपपादिता ।
जहत्-स्वार्था तु तत्रैव यत्र रूढ़िर्विरोधिनी ॥
पङ्कजं मनसादेवी पद्मनाभो युधिष्ठिरः" । इति—

तदेतद्वैयाकरण-मतं (ख) पङ्कजमस्तीत्यादितः पङ्क-जातं पद्ममस्तीत्याद्यनुभवस्य न्याय-मीमांसादि-सकल-तन्त्र-सिद्धत्वेन गौरवस्य प्रामाणिकत्वादनादेयं, अन्यथा अवयव-शक्तेरपि प्रतिवध्यतायामप्रवेशापत्तेर्लाघवेन पङ्कजातत्व-प्रकारक-शाब्द सामान्यं प्रत्येव रूढ़िधियः प्रतिवन्धकत्वस्य सुवचत्वात् ।

नन्वेवं (ग) द्रव्ये सरसिजमस्तीत्यादितो द्रव्यनिष्ठ सरोजमिव द्रव्याभिन्ने सरसि जातं पद्ममपि प्रतीयेत, नामार्थयोरभेदान्वये तन्त्रस्य नाम्नोः (घ) समान-विभक्तिकत्वस्यानपायादिति चेत् सत्यं सविभक्तिक-नामार्थस्य नामान्तरार्थान्वये वृत्तिशब्दैक-देशान्येनैव (१) समान-विभक्तिक-नामान्तरेण स्मारितत्वस्य तन्त्रतायाः स्वीकार्य्यत्वादिति (ङ) ॥ २७ ॥

(१) नामार्थस्याभेदेनान्वये वृत्तिशब्दान्येनैवेति क्वचित्पाठः ।

(क) अत्रैव श्रीपतिदत्त-संवादमाह "या वृत्ति"रित्यादिना । "अजहत्-स्वार्था" शक्यवृत्तिरूपेण वोधिका, "अत्र" ग्रन्थे । कुत्र रूढ़िज्ञानं प्रतिवन्धकमिति जिज्ञासायामाह "पङ्कज"-मित्यादि ।

(ख) "मत"मित्यस्य "अनादेय"मित्यग्रिमेणान्वयः । "अन्यथा" सर्व्वसिद्धानुभवापलापे इत्यर्थः ।

(ग) स्वमतव्यवस्थापनासमर्थो वैयाकरणः शङ्कते "नन्वेव"मित्यादिना । "एवं" योगरूढ़नाम-सत्त्वे इत्यर्थः ।

(घ) "समानविभक्तिकत्वस्य" विरुद्धविभक्तिराहित्यस्येत्यर्थः, तेन नीलपीतौ घटपटावित्यत्र न दोषः ।

(ङ) विशेष्यतयाऽभेदसम्बन्धावच्छिन्न-सविभक्तिकनामार्थ-प्रकारकान्वयवोधे वृत्तिशब्दैकदेशान्य-सविभक्तिक-नामोपस्थाप्यत्वं तन्त्रं । पदानां प्रत्ययैर्योगः समासश्चेह वृत्तयः । तथा च सरसिजेत्यत्र सरसीत्यस्य समासैकदेशतया वृत्तिशब्दैक-देशत्वान्नाभेद-वोधापत्तिरिति भावः ।

(क) "यद् यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैः समधिगम्यते" ॥ इति—

रूढ्यर्थ-योगार्थयोर्युगपदुपस्थितौ तयोकाङ्क्षादि-साचिव्यादाहत्या-(ख)न्वय-वुद्धिस्थल एव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो, न तु तयोरेव मिथः साकाङ्क्षत्वं, अन्यत्र योगार्थस्य वोधने रूढ़िधियः प्रतिवन्धकत्वं वा, प्रामाणाभावात्, एवञ्च यत्र योगार्थ-रूढ़िलभ्यार्थयोस्तात्पर्य्याद्यग्रहाद्विरोधि-समवधानाद्वा न प्रथममन्वय-धी-स्तत्र योगार्थ-मर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदाय-शक्त्या च पद्मत्वेन स्थल-कमलस्य वोधो भवत्येवेति मणिकृन्मतं दर्शयति—

रूढ्यर्थेऽन्यत्र वा यत्र यदा-(ग)काङ्क्षादि-निश्चयः ।
तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः ॥ २८ ॥

समुदाय-शक्त्युपस्थापिते पदान्तर-वृत्त्युपस्थापिते वा यत्र धर्म्मिणि अवान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षा-निश्चयादिस्तदैव तत्र तस्यान्वयवोध उत्पद्यते सम्भूतसामग्रीकत्वात् (घ)। रूढ्यर्थ-भिन्ने योगार्थस्यान्वय-वोध-व्युदासाय तु रूढ़े योगापहारिता-प्रवादो रूढ्यर्थमात्रे योगार्थस्यान्वय-वोध-सामग्री-स्थलाभिप्रायक इति चिन्तामणिकृतां मतम् ॥ २८ ॥

योगरूढ़ं विभजते ।

सामासिकं तद्धितान्तमिति तद्विविधं भवेत् ।
योगरूढ़ं कृदन्तस्य समासत्व-व्यवस्थितेः ॥ २९ ॥

तद् योगरूढ़ं सामासिकं समासात्मकं कृष्णसर्पादि । तद्धितान्तं

---

(क) मणिकृन्मतं दर्शयितुं भूमिकामाह "यद्य"दित्यादिना । "समधिगम्यते" अनुभाव्यत इत्यर्थः ।

(ख) "आहत्य" परस्परमित्यर्थः । प्रथमत इत्यपि वदन्ति ।

(ग) "यदा" यस्मिन् समय इत्यर्थः ।

(घ) शाब्दवोधसामग्रीसमवधानादित्यर्थः ।

वासुदेवादि। कृदन्तस्य पङ्कजादि-योगरूढ़स्य सामासिक एवान्तर्भाव इति नाधिक्यम् ॥ २९ ॥

यौगिकं नाम लक्षयति विभजते च—

योग-( क ) लभ्यार्थ-मात्रस्य बोधकं नाम यौगिकम्।
समासस्तद्धिताकश्च कृदन्तश्चेति तत्त्रिधा ॥ ३० ॥

यन्नाम स्वान्तर्निविष्ट-शब्दानां योग-लभ्यार्थमात्रस्यान्वय-बोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम्। योगरूढ़न्तु कृष्णसर्पादि-पदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं, न तु तन्मात्रस्य। तच्च यौगिकम् त्रिविधं, समासः तद्धिताक ( ख ) कृदन्तश्चेति, द्वन्द्वोऽपि समासः स्व-घटक-शब्दानामाकाङ्क्षया लभ्यस्य धव-खदिराद्यर्थस्यान्वय-बोधकतया यौगिक एव। सर्व्वेष्वेदं ( ग ) रूढ़ान्यत्वेन विशेषणीयं नातः कृष्णसर्पादौ, वासुदेवादौ पङ्कजादौ च योगरूढ़ेऽतिप्रसङ्गः। ब्राह्मणी, श्वश्रूः, शूद्रेत्यादौ ङीवादेः स्त्रीत्व-वाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढ़मेव, नातो विभागस्य व्याघातः ॥ ३० ॥

इति श्रीजगदीश-तर्कालङ्कार-कृतायां शब्दशक्ति-प्रकाशिकायां नाम-तद्विभाग-प्रकरणं समाप्तम्।

---

( क ) "योगो"ऽवयव-शक्तिः।

( ख ) बहुगुड़ादौ तद्धितान्तत्वाभावात्तद्धिताक्तमित्युक्तम्।

( ग ) "इदं" यौगिकविशेषलक्षणम् इत्यर्थः। तथा च रूढ़ान्यत्वे सति समासत्वं समासात्मक-यौगिकलक्षणम्, एवं तद्धिताक्तमपि, तथा च योगरूढ़े कृष्णसर्प-वासुदेवादौ विशेषलक्षणस्य नातिव्याप्तिरिति भावः।

# अथ समास-प्रकरणं ।

यौगिकेषु ( क ) समासं लक्षयति ।—

याद्दशस्य महावाक्यस्यान्तस्त्वादिर्निजार्थके ।
याद्दशार्थस्य धी-हेतुः स समासस्तदर्थकः ॥ ३१ ॥

याद्दश-महावाक्योत्तरस्त्व-तलादिः स्वार्थस्य (ख) याद्दशार्थावच्छिन्न-विषयता-शालि-बोधे हेतुस्ताद्दशं तद्वाक्यं तथाविधार्थं ( १ ) समासः। पाचकादिकन्तु पाक-कर्त्राद्यर्थकं वाक्यमपि स्व-घटकानेक-नाम-लभ्य-ताद्दशार्थकत्व-विरहान्न महावाक्यं । प्रकृत्यर्थ-मात्रावच्छिन्न-प्रत्ययार्थस्यान्वय-बोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यं, तेनो-( ग )पकुम्भादौ नाव्याप्तिर्न वा नीलघटत्वत्वमित्यादौ नीलघट-त्वादिभागेऽति-प्रसङ्गः ( २ ) । (घ) चौरपायोत्यादिकस्तु प्रकृत्यर्था-वच्छिन्न-कृदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थ-मात्रावच्छिन्नस्य,

---

( १ ) हेतुस्तद्वाक्यं ताद्दशार्थे इति क्वचित्पाठः ।

( २ ) अतिव्याप्तिरिति क्वचित्पाठः ।

---

( क ) योग-लभ्यार्थबोधकेष्वित्येवार्थः, न तु तदर्थमात्रबोधकेष्विति । तथा सति पङ्कजादि-पदासंग्रह-प्रसङ्गादिति ।

( ख ) "स्वं" त्व-तलादि । "याद्दशार्थावच्छिन्न-विषयताशालि बोधे" याद्दशार्थ-विषयता निरूपित-स्वार्थविषयता-शालि-बोधे इत्यर्थः । अत्र च वाक्यस्य महत्त्वं स्व-घटकानेकनाम-लभ्यार्थकत्वरूपं प्रथमतोऽभिप्रेतं । स्वं महावाक्यत्वेनाभिमतम् ।

( ग ) "तेन" नामाघटितं यद्वाक्यस्य महत्त्वं तस्य निर्व्वचनेनेत्यर्थः, अन्यथा निपातस्य नामत्वाभावेन निरुक्तनामघटित-महत्त्वाभावादुपकुम्भादौ समासलक्षणस्याव्याप्तिः स्यात् । निपा-तस्य नामत्वमङ्गीकृत्य उपकुम्भादावव्याप्ति-वारणे तु नामगर्भमहत्त्व-घटित-समास-लक्षणे दोषान्तरं दर्शयति "नवे"त्यादिना ।

( घ ) "प्रकृत्यर्थमात्रे"त्यत्र मात्रपद-व्यावृत्तिमाह "चौरपायी"त्यादि । "न प्रकृत्यर्थ-मात्रावच्छिन्नस्ये"त्यनन्तरं अपि तु चौरादिविशेषित-प्रकृत्यर्थावच्छिन्नस्येति योजनीयम् ।

ततः पानशील-सामान्यस्याप्रत्ययात् (१)। (क) राज्ञः पुरुषत्व-मित्यादितो राजन्येव पुरुष-भावः प्रतीयते, न तु राजपुरुषस्य भावः, तद्धितानां प्रकृत्यर्थ-मात्रान्वित-स्वार्थ-बोधत्वादतो राज्ञः पुरुषेत्यादि-भागे न प्रसङ्गः (२)। (ख) पायं पायमित्यादिको णमन्त-भागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वय-(३) बोधको, न तु त्वादि-प्रत्ययार्थस्य। प्रस्थायेत्यादौ तु समास-व्यपदेशो ल्यबादि-शब्द-संस्कार-प्रयोजको (४) गौणः ॥ ३१ ॥

विभजते—

स चायं षड्विधः कर्म्म-
धारयादि-प्रभेदतः।
यश्चोपपद-संज्ञोऽन्य-
स्तेनासौ सप्तधा मतः ॥ ३२ ॥

स चायं निरुक्तः समासः कर्म्मधारय-द्विगु-तत्पुरुषाव्ययीभाव-बहुव्रीहि-द्वन्द्व-भेदात् षड्विधः, यश्च कुम्भकारादिरप्युपपदसंज्ञकः समासोऽस्ति तेन समं समासः सप्तविधः। सङ्काश-निभ-नौकाशादी-नामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधक-तया तथाविध-नामान्तत्व-(५)मेव चैतस्य समासान्तराद्विशेषः ॥ ३२ ॥

(१) अबोधादिति क्वचित्पाठः।
(२) नातिप्रसङ्ग इति क्वचित्पाठः।
(३) अन्वय इति क्वचिन्नास्ति।
(४) संस्कार-फलक इति क्वचित्पाठः।
(५) पदान्तत्वमिति क्वचित्पाठः।

(क) राज्ञः पुरुष इति भागे समास-लक्षणासत्त्वमुपपादयति "राज्ञः पुरुषत्व"मित्यादिना।

(ख) त्व-तलादि-निवेश-व्यावृत्तिमाह "पायं पाय"मित्यादि। पायं पायं व्रजतीत्यादितः पुनःपुनः पानक्रिति-समानकालीनत्वस्य गमनादौ बोधनादिति भावः।

ननु यदि षड्विधः सप्तविधो वा समासस्तदास्य पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यतस्तामुपपादयति ।

पूर्व्व-मध्या-ऽन्त्य-सर्व्वा-ऽन्य-
पद-प्राधान्यतः पुनः ।
प्राच्यैः पञ्चविधः प्रोक्तः
समासो वाभटादिभिः ॥ ३३ ॥

कश्चित् समासः पूर्व्वपदार्थ-धर्म्मिकान्वय-वोधजनकतया पूर्व्वपद-प्रधान उच्यते, यथा प्राप्त-जायाऽर्द्ध-पिप्पली-पूर्व्व-कायादिकस्तत्पुरुषः, यथा वा उपकुम्भाद्यव्ययीभावः, पुरुष-सिंहादि-कर्म्मधारयश्च । कश्चिन्मध्यपदार्थ-धर्म्मिक-धी-जनकतयैव मध्यपदप्रधानो, यथा पटानधिकरण-प्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः, पटस्य नाधिकरणमित्यादि-विग्रहे मध्यपदार्थस्यैव विशेष्यत्वात्, (क) "वहुपदे वहुव्रीहिरेवे"त्यस्य तत्पुरुषादेर्वहुनाम-गर्भत्वाभावे तात्पर्य्यमित्यग्रे व्युत्पाद्यत्वात् । कश्चिदन्त्य-पदार्थ-धर्म्मिक-धी-हेतुत्वादन्त्य-पद-प्रधानः, यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्म्मधारयो द्विगार्ग्याद्यव्ययीभावश्च । कश्चित् सर्व्व-पदार्थ-धर्म्मिक-वुद्धि-हेतुत्वात् सर्व्व-पदप्रधानः, यथेतरेतर-द्वन्द्वो (ख) द्वन्द्वमात्रं वा । कश्चित् स्वघटकान्य--पदार्थ-धर्म्मिक-ज्ञान--जनकत्वा-दन्यपदार्थ-प्रधानः, यथा

(क) ननु पटानधिकरणमित्यस्य वहुपदगर्भत्वेन कुतस्तत्पुरुषत्वं इत्यत आह "वहुपद" इत्यादि । तथा च तत्र पदशब्दो नामार्थकः, प्रकृते च पटानधिकरणमित्यत्र नञो नामत्वाभावान्न कश्चिद्दोष इति भावः । "अग्रे व्युत्पाद्यमानत्वात्", "वहुपदे वहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास" इत्यादि-"सम्प्रदायविद"-इत्यन्त-ग्रन्थेन कर्म्मधारयलक्षणे पृः ९३, पः ९, व्युत्पाद्यमानत्वादित्यर्थः ।

(ख) प्राचां मते पाणिपादमिति समाहार-द्वन्द्वे उत्तरपदस्य साहित्यलक्षणया पाणिपाद-साहित्यमित्याकारकशाब्द-वोधस्याङ्गीकार्य्यत्वान्न तस्य सर्व्वपदप्राधान्यमित्यत आह "इतरेतर-द्वन्द्व" इति, स्वमते तत्र लक्षणानङ्गीकारादाह "द्वन्द्वमात्र"मिति ।

बहुव्रीहिः खले-यवाद्यव्ययीभावश्च ( क )। तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राच्यैरुक्तमतो न विरोधः।

नित्यानित्य-भेदेन समासस्य द्वैविध्यमप्यस्ति, यदुक्तं (१) जयादित्येन—

( ख ) "विभक्ति-मात्र-प्रक्षेपान्वितान्तर्गत-नामसु।
स्वार्थस्यावोध-वोधाभ्यां नित्यानित्यौ समासकौ" ॥ इति (२)

स्वान्तर्गत-नामसु विभक्तिमात्र-प्रक्षेपेण यल्लभ्यार्थस्यावोधः स नित्य-समासः, यथा कृष्णसर्प-निर्मक्षिकासुरादिः। कृष्णः सर्पः, मक्षिकाया निः, न सुर इत्यादितस्तल्लभ्यस्य वैजात्यादेरग्रहात्। यल्लभ्यस्य च वोधः सोऽनित्य-समासः, यथा राज-पुरुष पूर्व्व-कायादिः। तल्लभ्या-

---

( १ ) तदुक्तमिति क्वचित्पाठः।
( २ ) इतीति नास्ति हस्तलिखित-पुस्तके।

---

( क ) खलि यवा यदा इति विग्रहेण कालस्यैव विशेष्यत्वादिति भावः।

( ख ) यादृशानुपूर्व्वीमच्छब्द-ज्ञानजन्य-वोधविषय-यादृशार्थवोधं प्रति समासाघटक-स्वाप्रकृतिक-विभक्ति-विशिष्टानां स्वाघटकनामाद्यविशिष्टानां स्वघटकपदानां ज्ञानं अहेतुस्तादृशानुपूर्व्वीमान् समासस्तादृशार्थे नित्यसमास इत्यर्थः। विग्रहासाधुत्व-साधुत्वकृत एव नित्यानित्य-समास-विभागः। असमस्यमाननामाद्यसहकृत-समस्यमान-नामनिपातादिनार्थस्य कथनं विग्रहः। उपकुम्भाद्यव्ययीभावे वहुव्रीहौ चासमस्यमानेनापि समीप-यस्येत्यादि-पदेन समासार्थ-कथनात्तत्र तस्याविग्रहत्वमेव, अतएवोक्तं आलोककृता "न च घटस्य पटस्येत्यादिवत् उप कुम्भ इति व्यास-प्रयोगोऽस्ति येन तथा व्युत्पत्तिरवसीयेत, किन्तूपकुम्भमित्येव प्रयोगो नित्यसमासत्वा"दिति, मणिकृता च "वहुव्रीहेर्नित्यसमासत्वेन विग्रहाभावाच्च, चित्रागौर्यस्येतिवाक्यं वहुव्रीहेरन्यपदार्थ-कथनाय" इति। तथा चैतन्मते उपकुम्भ-चित्रग्वित्यादेर्नित्य-समास एवान्तर्भावः। विभाषाधिकारे तत्तत्-समासानुशासनञ्च विग्रहस्य समासार्थवोध-साकाङ्क्षत्व-प्रदर्शनाय, एवञ्च यत्र विग्रहवाक्यात् समासार्थाप्रतीतिस्तत्र नित्यसमास इति। अतएव लक्षणे मात्रपदानिवेशे कृष्णसर्पत्वादौ चित्रग्वित्यादौ च नित्यसमासेऽव्याप्तिः, स्वान्तर्गतनामसु विभक्ति-प्रक्षेपेऽपि कृष्णः सर्पो वैजात्यवान् चित्रागौर्यस्येति वाक्येन स्वार्थस्य वोधना-दतस्तदुपात्तमिति।

र्थस्य राज्ञः पुरुषः पूर्व्वं कायस्येत्यादि-वाक्यादपि प्रतीतेः। (क) स्फुरद्वाणी चलच्चैत्र इत्यादिकः कर्म्मधारयोऽप्यनित्य एव समासः, स्फुरन्ती वाणीत्यादि-विग्रहस्य वाण्यादौ स्फुरदादि-विधेयकान्वय-बोधाजनकत्वेऽपि स्फुरदभिन्न-वाण्यादावेकत्वादि-बोधकत्वमादायैव तदर्थ-प्रकाशकत्वात्। स्फुरन्तीं वाणीमित्यादि-वाक्यस्यैव तत्र विग्रहत्व-सम्भवाच्च। (ख) विग्रह एव समास-लभ्यार्थस्य बोधकत्वं तन्त्रं, न तु समासे विग्रहार्थस्य, विग्रह-लब्धयोर्लिङ्ग-संख्ययोर्व्यञ्जक-वैधुर्य्येण प्रायशः समासाबोध्यत्वात्। अतएव यत्र समासे तयो-

(क) ननु यादृश-विषयताकबोधे समासः स्वरूपयोग्यस्तादृश-विषयताकबोधे विग्रहस्य योग्यत्व एव प्राचीनैरनित्यसमासत्वं स्वीकृतं, एवञ्च स्फुरद्वाणीत्यादेरनित्यसमासत्वं न स्यात्, विग्रहवाक्यस्य तादृशबोधेऽसमर्थत्वात्। तथा हि स्फुरद्वाणीत्यत्र एकत्ववती वाणीस्फुरदभिन्नेति स्फुरद्विधेयकबोधः, स्फुरन्ती वाणीति-विग्रहे तु स्फुरदभिन्नवाणी एकत्ववतीत्येकत्व-विधेयको बोधो न तु स्फुरद्विधेयकः "वर्त्तमाने शतृशानचावप्रथमैकाधिकरणामन्त्रितयो"रित्यनुशासनेन प्रथमान्त-शतृजर्थ-विधेयकान्वयबोधस्य प्राचीनैरनङ्गीकारादित्यत आह "स्फुरद्वाणी"त्यादि। "तदर्थप्रकाशकत्वात्" समासलभ्यार्थबोधकत्वादित्यर्थः। तथा च स्फुरद्वाणीत्यत्र स्फुरद्विधेयक-बोधवत् एकत्वविधेयक-बोधस्यापि सम्भवेन तदर्थमादायैव तदर्थप्रकाशकत्वमिति तादृशबोधे च शतृजर्थस्य उद्देश्यदिशि प्रविष्टत्वेन विधेयत्वाभावान्नानुशासनविरोध इति भावः। नन्वेवं प्रथमान्त-शतृजर्थोद्देश्यक-बोधाङ्गीकारे सर्व्वत्रैवोद्देश्य-विधयान्वय-सम्भवादप्रथमैकाधिकरण इति निषेध-वैफल्यं, किञ्च चलदेक इत्यादेस्तथाप्यसंग्रहः चलदभिन्नैकत्वविशिष्टे एकत्वान्वये चलन्नेक इत्यादेर्निराकाङ्क्षत्वेन विग्रहत्वासम्भवादित्यत आह "स्फुरन्ती"मित्यादि। तथा च विग्रहस्य समासलभ्यार्थ-बोधकत्वमेवानित्यसमासत्व-नियामकं, न तु यादृशविषयताकबोधेसमासः स्वरूप-योग्यस्तादृशविषयताक-बोधे विग्रहस्य योग्यत्वमिति भावः।

(ख) ननु तादृशवाक्यस्य विग्रहत्वमेव न सम्भवति, तल्लभ्यस्य कर्म्मत्वादेः समासेनाबोधनात्, विग्रह-समासयोस्तुल्यार्थकत्वनियमादित्यत आह "विग्रह एवे"त्यादि। "तन्त्रमिति", विग्रहे समासार्थबोधकत्वमेव अनित्यसमासत्व-नियामकमित्यर्थः। निरुक्त-तुल्यार्थकत्व-नियमस्यापि विग्रहे समासार्थबोधकत्वमित्यत्रैव तात्पर्य्यमिति भावः। 'विग्रह एवे"त्येवकार-व्यवच्छेद्यमाह "न तु समासे विग्रहार्थस्येति, अस्य च "बोधकत्वं तन्त्र"मिति पूर्व्वेणान्वयः, अत्र हेतुमाह "विग्रह-लभ्ययो"रित्यादिना। "प्रायशः समासाबोध्यत्वात्" बहुषु स्थलेषु नित्यानित्य-समासाबोध्यत्वा-दित्यर्थः। "अत एवे"ति, लिङ्ग-संख्ययोः नित्यानित्य-समासाबोध्यत्वस्यासार्व्वत्रिकत्वादेवेत्यर्थः।

व्यञ्जक-सद्भावस्तत्रावगमोऽपि ; यथा जरती-चित्रगुर्जन ( क ) प्रियतिसा पुरुष इत्यादौ स्त्रीत्वादेः, स्त्रीप्रत्यय-तिस्रादेशयोस्तदभिव्यञ्जकयोः सत्त्वात्। यथा वा ( ख ) अक्ष-परि शलाका-परि प्रिय-युवया हस्त्यश्वमित्यादावेकत्वादेः, अक्ष-शलाकयोरेकत्व एवाव्ययीभावस्य युष्मदस्मदोर्द्वित्व एव युवाद्यादेशस्य सेनाङ्गानां बहुत्व एव समाहारद्वन्द्वस्य विधानात्। तदुक्तमभियुक्तैः—

"संख्यातु व्यञ्जकाभावादव्यक्ता प्रातरादिवत्।
यत्र तु व्यञ्जकं किञ्चित्तत्र संख्या प्रकाशते॥
( ग ) शलका-परि हस्त्यश्वं पूर्व्व-कायोऽर्द्ध-पिप्पली"ति.।

पूर्व्वादेरर्द्धस्य च ङसर्थैकत्वमन्तर्भाव्यैवावयविना तत्पुरुषस्य व्युत्पन्नत्वात्। ( घ ) सरसिजादौ कण्ठेकालादौ चालुक्-समासे सुपः संख्यावगमेऽपि न ख्यतिः। तत्र ( ङ ) व्यञ्जक-सुपः सत्त्वेऽपि संख्या न बुध्यत इति तु समास-शक्ति-वादिनः पातञ्जलाः॥ ३२॥

---

( क ) नित्यसमासे व्यञ्जकं दर्शयति "जरतीचित्रगुर्जन" इति, जरती चित्रा गौर्यस्येत्यर्थकथनमिति। अत्र समासे न पुम्बद्भावः, समासोत्तरपदे पर एव तद्विधानात्, अतएव चित्राजरद्गुरित्यपि साधुः।

( ख ) नित्यसमासे लिङ्गव्यञ्जकमुदाहृत्य संख्याव्यञ्जकमाह "यथा वे"त्यादि। अनित्यसमासे व्यञ्जकमाह "हस्त्यश्व"मिति।

( ग ) कुत्र प्रकाशते इत्याकाङ्क्षायामाह "शलाकापरी"त्यादि। "एकत्वमन्तर्भाव्ये"ति ङसन्तावयविवाचकपदेन सह पूर्व्वादेर्नपुंसकलिङ्गार्द्धादेश्च तत्पुरुषानुशासनादिति भावः। तथा च पूर्व्वं कायास्यामित्याद्यर्थे न तादृशः समासः, न वा पूर्व्वं कायादित्याद्यर्थे।

( घ ), सरसिजेत्यादेर्नित्यसमासस्य व्यञ्जकविभक्तिमत्त्वेनैकत्व-बोधकत्वेऽपि नित्यसमासत्वस्य ख्यतिर्नास्तीत्याह "सरसिजादा"वित्यादिना। "सुपः संख्यावगमेऽपि" संख्यावगमे समर्थस्य सुपः सत्त्वेऽपीत्यर्थः। "नख्यतिः" न नित्यसमासत्व-ख्यतिस्तल्लक्षणे विभक्तौ समासाघटकत्वस्य निवेशितत्वादिति भावः।

( ङ ) समासशक्तिवादिवैयाकरणमतमाह "तत्रे"ति सरसिजादावित्यर्थः। तन्मते तस्य समुदायस्यैव शक्तत्वेनायौगिकत्वादिति भावः। एतन्मतं पृः ७७, पः ८, "यदपी"त्यादिना-भिहितं।

समासेषु कर्म्मधारयं लक्षयति ।—

क्रमिकं यन्नाम-युग-
मेकार्थेऽन्यार्थ-बोधकम् ।
तादात्म्येन भवेदेष
समासः कर्म्मधारयः ॥ ३४ ॥

क्रमिकं यन्नाम-द्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि तादात्म्येनापर-नाम्नोऽर्थस्यान्वय-बोधं प्रति समर्थं तादृशं नाम-द्वयं कर्म्मधारयः । नीलोत्पलमित्यादावुत्पलादि-पदस्यार्थे नीलादि-पदार्थस्य तादात्म्येनान्वयः, तथा पुरुष-सिंह इत्यादावपि पुरुषादावुत्तर-पद-लक्षितस्य सिंहादि-सदृशस्य पुरुषः सिंह इवेत्यादि-विग्रहे "प्रायेणोपमेयस्योपमाने"रिति कर्म्मधारयानुशासनात् । (क) कुम्भस्य समीपमित्याद्यर्थक-स्तूपकुम्भादिर्न तादात्म्येनान्वय-बोधकः, (ख) प्रवणमपद्रव्यमित्यादेः संग्रहाय नाम-पदस्य धातु-भिन्नोपलक्षकत्वात्, (ग) सार्थक-

(क) तादात्म्येनेत्यस्य-व्यावृत्तिमाह "कुम्भस्ये"त्यादिना ।

(ख) ननु उच-प्रभृतेर्नामत्वाभावेनोपकुम्भादौ क्रमिकनामद्वयस्याभावादतिव्याप्तिर्न सम्भवतीत्यतो नाम-पदस्य धातुभिन्नपरत्वे हेतुमाह "प्रवण"मित्यादिना । तथा चोपादेर्धातुभिन्नत्वेन न कोऽपि दोषः । "प्रवणं" प्रकृष्टं वनमित्यर्थः, "अपद्रव्यं" अपकृष्टं द्रव्यमित्यर्थः ।

(ग) नाम-पदस्य धातुभिन्नपरत्वे स्तोकनम्रेत्यादौ कर्म्मधारयो न स्यादत आह "सार्थके"-त्यादि । नन्वेवं स्तोकं पचतीत्यत्र कर्म्मधारयत्वापत्तिस्तस्य तादात्म्येन धात्वर्थेऽन्वयबोधकत्वात् । न च तादात्म्येन भवेदेष समासः कर्म्मधारय इत्युक्त्या समासत्वे सतीति विशेषणमस्तीत्यवगम्यते, तथा च स्तोकं पचतीत्यस्य समासत्वाभावादेवातिव्याप्तिवारणमिति वाच्यं तथा सति नीलमुत्पल-मिति वाक्य-वारक-क्रमिकत्वोपादानस्य वैयर्थ्यप्रसङ्गात्, तस्यासमासत्वेनैव वारण-सम्भवात्, एवञ्च क्रमिकत्वोपादान-पक्षे समासत्वे सतीति विशेषणं नास्त्येवेति स्तोकं पचतीत्यादावतिव्याप्तिवारण-मशक्यमिति चेन्न क्रमिकत्वाभावादेव तद्वारणसम्भवात्, स्तोकमिति विभक्त्या व्यवधानात् । साधु पचतीत्यादावपि दधि पश्यतीत्यादिवत् विभक्त्यनुसन्धानादेव शाब्दबोधः, समासे तु विभक्त्यनुसन्धानं विनैवेति न कोऽपि दोषः । लक्षणे क्रमिकमित्यस्य अव्यवहितोत्तरत्वेन यथार्थ-प्रतीति-विषयत्व-मित्यर्थकत्वात् साधु पचतीत्यादौ नातिव्याप्ति-शङ्केति भावः ।

सामान्य-परत्वेऽपि सत्यभावाच्च। नीलमुत्पलमित्यादिकं तु समान-विभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं, विभक्त्या व्यवधानात्।

(क) यदि च तादात्म्येन नीलादि-नामार्थस्यान्वयबुद्धौ नीलादि-नामोत्तर-नामोपस्थाप्यत्वं तन्त्रमतो न तत्राभेदसम्बन्धेन नीलादे-रन्वयः, परन्तु विशेषण-विभक्त्युपस्थापिते तादात्म्य एवाधेयत्वेन, नील-घटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवं द्वन्द्वात्मक-नाम्नैवोपस्थापिते पटे नीलस्य तादात्म्येनान्वयान्न व्यभिचारः, स्तोकं पचति धान्येन धनं प्रकृत्या पटुरित्यादावपि स्तोकादे-र्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्य एवाधेयत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव।

(ख) राजपुरुष इत्यादिकस्तु तत्पुरुषो न पुरुषे पूर्व्वपद-

---

(क) प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वसम्भवे तत्परित्यागस्यानौचित्यमित्यभिप्रेत्या-काङ्क्षाग्रन्थे मणिकृद्भिरभिहितं "समानविभक्तिकयोरभेदानुभवबलाद्विशेषणान्वित-विभक्तेरभेदार्थ-कत्व"मिति, एवञ्च नीलमुत्पलमित्यादौ एकत्ववन्नीलाभेदवानेकत्ववदुत्पलमिति शाब्दबोधस्यैवाभ्युप-गन्तव्यतयास्य वाक्यस्य तादात्म्यसम्बन्धेनान्वय-बोधकत्वाभावादेवातिप्रसङ्गस्य वारण-सम्भवात् क्रमि-कत्वविशेषणमनुपादेयमित्याह "यदि चे"त्या"द्यनुपादेयमेवे"त्यन्तेन। "तत्र" नीलमुत्पल-मित्यत्रेत्यर्थः। ननु "तादात्म्येने"त्यादि-नियमाभ्युपगमे नीलघटपटावित्यादौ नीलपदार्थस्याभेद-सम्बन्धेन पटेऽन्वयानुपपत्तिस्तस्य नीलनामोत्तर-नामानुपस्थाप्यत्वादित्याशङ्कामपनेतुमाह "नील-घटपटा"वित्यादि। ननु तथापि स्तोकं पचतीत्यादौ स्तोकादेरभेदेन पाकेऽन्वयानुपपत्तिरित्यत-स्तत्राभेदप्रकारकबोध-मङ्गीकरोति "स्तोक"मित्यादिना। एवञ्च "तादात्म्येन नीलादिनामार्थस्ये"त्यादि-नियमे न कोऽपि दोष इति भावः। अत्र "यदि चे"त्यनेनास्वरसः सूचितः, स च नीलं पीतञ्चोत्पलं यत्रेत्यर्थक-नीलपीतोत्पलं सर इत्यादि-वक्ष्यमाण-(पृः ९३, पः ५,) त्रिपद-बहुव्रीहि-स्थले उत्पलादौ नीलाभेदान्वयानुपपत्तिरूपः, उत्पलस्य नीलनामोत्तर-नामानुपस्थाप्यत्वादिति।

(ख) "तादात्म्येने"त्यस्य व्यावृत्तिमाह "राजपुरुष" इत्यादि। तथा च "तादात्म्येने"त्यनुक्तौ तत्राव्याप्तिरिति भावः। "अतएव" व्यास-समासयोस्तुल्यार्थकत्वादेवेत्यर्थः। "मणि-कृदुक्त"मिति "तत्पुरुषेऽपि राजपुरुष इत्यादौ पूर्व्वपदस्य षष्ठ्यर्थ-सम्बन्धे निरूढलक्षणयैव राज-

लक्षितस्य राजसम्बन्धिनस्तादात्म्येनान्वय-बोधकः, समास-विग्रह-योस्तुल्यार्थकत्व-हान्यापत्तेः, परन्तु राजसम्बन्धस्यैव, अतएव राजपुरुष इत्यादौ पूर्व्वपदे षष्ठ्यर्थ-सम्बन्धे लक्षणेति मणिकृद्वचनमपि संगच्छते। (क) यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते।

(ख) किञ्चिद्विशिष्ट-सुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वय-बोधकत्वमुक्तनिरुक्तौ निवेश्यम्। न चैवमपि पञ्चपुल्यादि-द्विगौ द्विगार्ग्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्न-गार्ग्यादि-बोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्।

अत्र च मानुषब्राह्मणो ब्राह्मणमानुष इत्याद्यप्रयोगाद् विशेषण-

---

सम्बन्धि-पुरुषबुद्ध्युपपत्तेर्न समासे शक्तिरनन्य-लभ्यस्य शब्दार्थत्वात्" इत्यनेन शब्दखण्डे समासवादे तत्त्वचिन्तामणिकृताभिहितमित्यर्थः।

(क) ननु राजपदस्य सम्बन्ध-लाक्षणिकत्वे पुरुषेण समं तस्य भेदान्वयो न स्यात् नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादित्यत आह "यथा चे"त्यादि। "वक्ष्यते" तत्पुरुषलक्षण-व्याख्यायामिति शेषः। तथा च नामार्थयोरित्यादिनियमे निपातातिरिक्तत्वमिव तत्पुरुषान्यत्वमपि निवेश्यं, निपातातिरिक्तत्वानिवेशे घटो नास्तीत्यादौ घटादेः प्रतियोगितासम्बन्धेन नञर्थेऽन्वयानुपपत्तिः स्यादिति भावः।

(ख) उक्त-नियमे तत्पुरुषान्यत्वनिवेशे गौरवात् तत्पुरुष-स्थले अभेद-संसर्गक-बोध एवाभ्युपगन्तव्यस्तथा च तत्र पूर्व्वपदस्य सम्बन्धि-लाक्षणिकत्वमेव युक्तमिति यद्युच्यते, तदा तत्पुरुषातिव्याप्तिवारणाय कर्म्मधारय-लक्षणे विशेषणान्तरं देयमित्याह "किञ्चिद्विशिष्टे"त्यादिना। तथा च किञ्चिन्निष्ठ-प्रकारता-निरूपित-विशेष्यत्वाभिन्ना या स्व-प्रयोजक-विग्रहवाक्यस्थ-सुबर्थनिष्ठावच्छेदकता तन्निरूपित-तादात्म्यसम्बन्धावच्छिन्न-प्रकारताशालि-बोधजनकं यद्यत्स्वं तदन्यत्वं कर्म्मधारयलक्षणे निवेश्यमिति भावः। समास-विग्रहयोः प्रयोज्य-प्रयोजक-भावस्तु स्व-घटकशब्दशक्ति-ग्राहकत्वरूपो "विग्रहेण विग्रहे वा समास" इति प्रतीतिसिद्धः-स्वरूपसम्बन्धविशेष एव वा। अभिन्ना येत्यन्तानुपादाने एक-घट इति कर्म्मधारयेऽव्याप्तिस्तस्य स्वप्रयोजकैकश्चासौ घटश्चेति-विग्रहवाक्यस्थसुबर्थनिष्ठावच्छेदकतानिरूपित-तादात्म्य-सम्बन्धा-वच्छिन्नप्रकारताशालि-बोधजनकत्वादतस्तदुपात्तमिति।

विशेष्ययोर्यत्र (क) मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्म्मधारयः साधुः। प्रमेयधूम इत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्य-सम्बन्धार्थक-षष्ठ्या तत्पुरुष एवेति वृद्धाः।

(ख) चन्दनतरुर्विन्ध्यगिरिर्वसन्तसमय इत्यादि-प्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषण-व्यभिचारित्वं कर्म्मधारये तन्त्रं, न तु विशेषणस्यापि तद्-व्यभिचारित्वं। पुरुषोत्तम इत्यत्र चोत्तमत्वं न नित्य-ज्ञानादिमत्त्वं, किन्तु भ्रम-विधुरत्वं, अतएव तत्र पुरुषस्येव पुरुषेऽपि तस्य व्यभिचार-सत्त्वादुत्तमपुरुष इत्यपि कर्म्मधारयः साधुरिति तु नव्याः।

तदाद्युत्तर-पदकः कर्म्मधारयश्च प्रायशो नेष्यते, नीलतदस्तीत्यादितो जात्वपि (ग) नीलोत्पलादेरस्तित्वाद्यप्रतीतेः।

---

(क) "मिथस्तादात्म्येन व्यभिचारः" व्यभिचारोऽत्र भेदरूपस्तथा च विशेष्ये विशेषण-भेदो विशेषणे च विशेष्य-भेदः कर्म्मधारय-नियामक इति भावः। विशेषणविशेष्ययोः परस्परभेदस्य कर्म्मधारय-नियामकत्वे चन्दनतरुरित्यादौ कर्म्मधारयानुपपत्तिरित्यस्वरस-सूचनाय "वृद्धा" इत्युक्तम्।

(ख) पूर्व्वकल्पेऽस्वरस-सत्त्वान्नव्यमतमाह "चन्दनतरु"रित्यादिना। "व्यभिचारित्वं" भेद इत्यर्थः। नन्वेवं पुरुषोत्तम इत्यत्र उत्तमपदार्थे नित्यज्ञानादिमति पुरुषभेदासत्त्वेन कर्म्मधारयानुपपत्तिर्वेदाहमेतं पुरुषं महान्तमित्यादि-श्रुत्या नित्यज्ञानादिमतोऽपीश्वरस्य पुरुषत्व-प्रतिपादनादित्यत उत्तमपदस्यार्थकथनेन तत्र कर्म्मधारयमुपपादयति "पुरुषोत्तम" इत्यादिना। "भ्रम-विधुरत्व"मिति, यत्र येन सम्बन्धेन यो नास्ति तत्र तेन सम्बन्धेन तस्य ज्ञानं भ्रमस्तच्छून्यत्वमित्यर्थः स्व-व्यधिकरण-प्रकारावच्छिन्न-विशेष्यता-निरूपकज्ञानशून्यत्वमिति पर्य्यवसितार्थः। स्वं विशेष्यता। विशेष्यतायां प्रकारावच्छिन्नत्वमनुभवसिद्धः स्वरूपसम्बन्धविशेषः। एवञ्च घटादौ निरुक्तोत्तमत्व-सत्त्वात्तत्र च पुरुषभेदसत्त्वेन न कर्म्मधारयानुपपत्तिः। "अतएव" उत्तमपदस्य निरुक्तार्थकत्वादेवेत्यर्थः। "तत्र" भ्रमविधुरे घटादौ इत्यर्थः। "तस्य" भ्रमविधुरस्य घटादेरित्यर्थः।

(ग) "जात्वपि" कदाचिदपीत्यर्थः।

(क) "पक्क-यद्भोजनं रम्य-माम-तद्भोजनं (१) वृथा।
नील-यद्रस (२) आस्वाद्यः कटु-तद्रूपमीड्यते"॥

इत्यादि-प्रयोगात् क्वचिदिष्यतेऽपि, प्रयुक्तञ्च कुमरनन्दिना परमः स इत्याद्यर्थे "परम-सः" "परमता" वित्यादि। तत्पुरुषोऽप्येतेन (३) व्याख्यातः (ख)।

(ग) ननु विशेष्यतया नामार्थ-प्रकारकान्वय-बुद्धिमात्रं प्रत्येव नामोत्तर-विभक्त्युपस्थाप्यत्वं तदुत्तर-प्रत्ययोपस्थाप्यत्वं वा तन्त्रं, न तु तादात्म्य-सम्बन्धानवच्छिन्न-तत्प्रकारताक-बुद्धिं प्रति तथा, गौरवादतो नामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्म्मधारयादि-समासो न यौगिकः, किन्तु नीलोत्पलादि-विशिष्टे रूढ़ एव, तदुक्तं भर्त्तृहरिणा—

(१) भञ्जनमिति क्वचित्पाठः।

(२) तद्रस इति क्वचित्पाठः।

(३) एतेन तत्पुरुषोऽपीति क्वचित्पाठः।

(क) "प्रायशो नेष्यत" इत्यत्र प्रायः पदेन क्वचिदिष्यत इति सूचितं, तथा च कुत्र सूचितमित्याकाङ्क्षायामाह "पक्वयदि"त्यादि। पक्वाभिन्नस्य यस्य भोजनं रम्यं आमाभिन्नस्य तस्य भोजनं "वृथा" निष्फलं। नीलाभिन्नस्य यस्य रस आस्वाद्यः कटुभिन्नस्य तस्य रूपमीड्यते इति कारिकार्थः।

(ख) "एतेन" कर्म्मधारय-न्यायेनेत्यर्थ,: तथा च तदाद्युत्तरपदकस्तत्पुरुषोऽपि प्रायशो नेष्यते क्वचिदिष्यते च, यथा "पादपद्मं शिवा-यद्वी"त्यादौ शिवाया यत् इति विग्रहेण शिवायदिति षष्ठीतत्पुरुष इति भावः।

(ग) समासशक्तिवादिनां वैयाकरणानां मतमाह "नन्वि"त्यादिना "वैयाकरणा" पृः ८२, पः ३, इत्यन्तेन। "विशेष्यतये"ति विशेष्यतासम्बन्धेनेत्यर्थः। दाधिरित्यत्र प्रत्ययोपस्थाप्येऽपत्ये दधस्यान्वयानुपपत्तिस्तस्य विभक्त्युपस्थाप्यत्वाभावादित्यत आह "तदुत्तर-प्रत्ययोपस्थाप्यत्व"मिति। "तथा" निरुक्तोपस्थाप्यत्वं तन्त्रमित्यर्थः। न त्वित्यत्र हेतुमाह "गौरवा"-दिति, कार्य्यतावच्छेदक-गौरवादित्यर्थः। समासस्य रूढ़त्वे प्राचीनसम्मतिमाह "अबुधानि"त्यादि। "अबुधान्", अज्ञानित्यर्थः। ननु समासस्य समुदायशक्तत्वे वाक्यत्वं न स्यादित्यत्रेष्टापत्तिमाह "शब्दान्तरत्वा"दित्यादि, योगेनार्थ-प्रतिपादकशब्द-भिन्नत्वात् समासो वाक्याद्भिद्यते, तथा च तयोः परस्परमत्यन्तभेद एवेति भावः।

"अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये।
शब्दान्तरत्वा-दत्यन्तं भेदो वाक्य-समासयोः" ॥

इति वैयाकरणाः। तन्मन्दं नीलोत्पलमित्यादौ समुदाये रूढ्य-प्रतिसन्धानेऽपि नीलादि-प्रत्येक-पदार्थोपस्थित्या तयोस्तादात्म्येनान्वय-बोधस्यानुभविकत्वेन गौरवस्य प्रामाणिकत्वात्, अन्यथा नामार्थ-स्यान्वयबोध-सामान्यं प्रत्येव नामोत्तर-नामोपस्थाप्यत्वं तन्त्रमुररी-कृत्य नीलमानयेत्यादौ नामार्थ-सुबर्थयोर्नान्वय-बोधः, परन्तु सुबन्त-भागस्य नीलविशिष्ट-कर्मत्वादौ रूढिरेवेत्यपि किन्न रोचयेः ? न च समासस्याशक्तत्वे नीलो द्रव्यञ्च घट इत्यादाविव नीलघटो द्रव्यमित्या-दावपि घटे धर्म्मिण्येकत्र द्वयमिति न्यायेन नील-द्रव्ययोस्तादात्म्ये-नान्वयापत्ति-(क)रिति वाच्यं नामार्थस्य (ख) मुख्यविशेष्यताक इव

---

(क) "तादात्म्येनान्वयापत्ति"रिति तादात्म्यसम्बन्धावच्छिन्न-विधेयताकान्वयबोधापत्ति-रित्यर्थः। समासस्य शक्तत्वे तु नीलघटभागस्य नीलाभिन्न-घटवाचकतया तादृश-घट एव द्रव्यान्वय इति न काप्यापत्तिरिति भावः।

(ख) "नामार्थस्ये"त्यादि, यथा नामार्थमुख्य-विशेष्यताकान्वय-बोधे प्रथमान्तत्वं तन्त्रं तथेत्यर्थः। तथा च तन्नामार्थ-निष्ठ-तादात्म्यसम्बन्धावच्छिन्न-विधेयता-सम्बन्धेनान्वयबोधं प्रति प्रथमान्त-तन्नामोपस्थाप्यत्वं तन्त्रं इति भावः। ननु तथापि नीलघटो द्रव्यमित्यत्र एकत्र द्वय-मितिरीत्या नील-द्रव्याभ्यामवच्छिन्ने घटे धर्म्मिणि कथं नैकत्वविधेयको बोधः ? न चेष्टापत्तिः, समासशक्तिवादिनां मते घटत्वं नीलञ्चोद्देश्यतावच्छेदकीकृत्य द्रव्यभानं ततो नीलद्रव्यमुभयं तादात्म्येन धर्म्मितावच्छेदकीकृत्य एकत्वभानस्यैव सम्भवेन घटत्वमुद्देश्यतावच्छेदकीकृत्य युगपन्नील-द्रव्ययोर्भान-स्वीकारे फलापलाप-प्रसङ्गादिति चेत् सत्यं नीलो द्रव्यञ्च घट इत्यत्र यथा एकत्व-विधेयक-भानं नास्ति तथा नीलघटो द्रव्यमित्यत्रापि एकत्वविधेयकभानस्यानुभवेनास्पर्शनात्, नीलत्वावच्छिन्न--प्रकारता-निरूपित-घटत्वावच्छिन्न--विशेष्यत्वाभिन्नविशेष्यता-निरूपित-द्रव्यत्वावच्छिन्न-विधेयताकबोधं प्रत्येव नीलघटो द्रव्यमित्यानुपूर्व्या हेतुत्वं कल्प्यते, नीलो द्रव्यञ्च घट इत्यत्रापि समूहालम्बन-सूचक-चकारबलात् एकत्वविधेयक-बोधो न मन्यते, तथात्वे नील-द्रव्ययोरुद्देश्यताव-च्छेदकतया एकत्रद्वयमिति न्यायेन एकस्या विशेष्यताया नीलत्व-द्रव्यत्वावच्छिन्नोभयप्रकारता-निरूप-कत्व-सम्भवेनैकवाक्यता-पर्य्यवसाने वाक्यभेद-सूचक-चकार-वैयर्थ्यापत्तेः। तस्मात् नीलो द्रव्यञ्च

तादात्म्यावच्छिन्न-विधेयताकेऽपि बोधे नाम्नः प्रथमान्तत्वस्य तन्त्रत्वात्। विधेयत्वन्तु (क) विषयतावच्छेदकत्वान्य-प्रकारत्वं, प्रकारता-प्रभेदो वेत्यन्यदेतत्। पटमित्यादौ तु कर्मत्वादौ पटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः।

(ख) ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे नीलपीतोत्पलं सर इत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थे नील-पीतोत्पलं पुष्पमित्यादिकः कर्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठ-धर्मिताक-धी-जनकः कथं न स्यादिति चेन्न "बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास" इत्यनुशिष्टि-बलेन बहुव्रीहेरेव (ग) स्व-निविष्ट-नामद्वयोपस्थाप्यार्थ-द्वयावच्छिन्न-तादृश-नामान्तरार्थ-निष्ठ-विषयताक-बोधं प्रति हेतुत्वेन (घ) समासान्तरस्य तादृश-धियं प्रत्यसमर्थत्वात्। (ङ) "नीलपीतोत्पलेरम्ये

---

घट इत्यानुपूर्व्या अपि नीलत्वावच्छिन्न-द्रव्यत्वावच्छिन्न-विधेयता-द्वयनिरूपित-घटत्वावच्छिन्नोद्देश्यता-द्वयशालिसमूहालम्बनबोध एव हेतुत्वमुपेतव्यमिति चिन्त्यम्।

(क) ननु नीलघटो द्रव्यमित्यत्र कथं नीलस्य विधेयत्वमित्याशंक्य तस्य विधेयत्वं निराकरोति "विधेयत्वञ्चे"ति। तथा चोक्तस्थले नीलस्य विशेष्यतावच्छेदकत्वान्नदोषः। ननु वह्नि-व्याप्यवत्तापरामर्शोत्तरमितरबाधवशात् यत्र महानसीय-वह्न्यनुमितिस्तत्र महानसीयवह्नौ विधेयत्वापत्तिरित्यत आह "प्रकारता प्रभेदो वे"ति, पर्वतोवह्निमान् पर्वते वह्निरित्यादिज्ञानविषयकानुभव-सिद्धो विषयता-विशेष इत्यर्थः। प्रकारतेत्युक्तौ पर्वते वह्निरित्यत्राव्याप्तिः।

(ख) अत्र शङ्कते "नन्वि"त्यादिना।

(ग) स्वं बहुव्रीहिः।

(घ) "समासान्तरस्य" बहुव्रीहिभिन्न-समासस्येत्यर्थः। "तादृशधियं प्रति" स्व-निविष्ट-नामद्वयोपस्थाप्यार्थद्वयावच्छिन्न-तादृशनामान्तरार्थ-विषयताकबोधं प्रतीत्यर्थः। "असमर्थत्वा"दिति, तथा च नीलपीतोत्पलं पुष्पमित्यानुपूर्व्वी-ज्ञानस्य एकत्रद्वयमितिरीत्या बोधान्यबोधं प्रत्येव हेतुत्व-कल्पनात्तादृशस्थले-कर्मधारय-वारणमिति भावः।

(ङ) ननु नीलं पीतञ्चोत्पलं रम्यमित्याद्यर्थे "नील-पीतोत्पले रम्ये" इत्यादि-प्रयोगात् तादृश-संकोचो दुर्घट इत्यत आह "नील-पीतोत्पल" इत्यादि। "अतएव" तादृश-प्रयोगस्य निरुक्तसमूहालम्बन-बोधजनकत्वादेवेत्यर्थः।

नीलपीतोत्पलाश्रित”मित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रम्यमित्याकारक एव बोधो, न तु नीलं पीतञ्च यदुत्पलं तद्रम्यमित्याकारः। अतएव द्वन्द्वात्परस्य प्रत्येकाभिसम्बन्ध-सूचनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति, न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम्। (क) घटस्य नाधिकरणमित्यादि-विग्रहे घटानधिकरणमित्यादिकस्तु मध्यपदप्रधान-स्तत्पुरुषो न बहुनाम-गर्भो न वैकत्र द्वयमिति न्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः।

स्यादेतत् समासानां समुदाय-शक्तत्वे “वाचस्पतिर्मितायाः” (ख) “स श्यामे कण्ठेव्रणः पुमान्” इत्यादौ वाचि मितायाः कण्ठे च श्यामादेर्नाभेदेनान्वयो, वागादेः पदार्थैकदेशत्वेन तत्र पदान्तरार्थस्य पशुरपशुर्गगनं समवेतमित्यादाविव निराकाङ्क्षत्वात्; एवं “पत्नग्रा द्विजातिस्वाध्यायो जटाभिस्तापसस्त्वह”’त्यादौ पत्नीसहभावस्य द्विजातौ जटावैशिष्ट्यस्य च तापसे भेदेनापि नान्वयो यथाकाशमभिघातादित्यादौ; यौगिकत्वे तु तत्र तत्र तथाविधान्वयो दुर्वारो वाक्-प्रभृतेः पदार्थत्वादिति चेन्न वृत्त्येकदेश-पदस्यार्थे सम्बन्धस्य कारकस्य वा

---

(क) ननु घटानधिकरणमित्यत्रोक्त-“स्व-निविष्ट”त्यादि-पृ: ९३, प: १०, नियम-विरोध इत्याशङ्कामपनेतुमाह “घटस्ये”त्यादि। “न बहुनामगर्भ” इति, नञो नामत्वाभावादिति भावः। तथात्वेप्याह “नवे”त्यादि, तथा च तत्रैकत्र द्वयमितिरीत्या नामार्थ-द्वयावच्छिन्नत्वस्य निविष्टत्वेन नानुपपत्तिरिति भावः।

(ख) समासानां समुदायशक्तिकल्पने एतद्भयात् तदेवाह “वाचस्पतिरि”त्यादिना “नान्वय” इत्यन्तेन, तथा च समुदाय-शक्तत्वे “नान्वय” इत्येतत् स्यादित्यर्थः। “मितायाः” इत्यस्य परिमितायाः इत्यर्थः। “पशुरपशु”रिति लोमवल्लाङ्गुलवत्त्वं पशुत्वं, शब्दसमवायिकारणत्वं गगनत्वं तयोरेकदेशे लोम-शब्दादौ यथा अपशुत्व-समवेतत्वयोर्नान्वयस्तथा इत्यर्थः “वाचि” वाक्पदार्थे इत्यर्थः। अभेदेनान्वये निराकाङ्क्षत्वमुक्त्वा भेदेनान्वयेपि निराकाङ्क्षत्वमाह “एव”-मित्यादि। अध्ययनयोग्यकालः स्वाध्यायपदार्थः। “आकाश”मित्यादि, आकाशपदार्थैकदेशे शब्दे अभिघातप्रयोज्यत्वस्य यथा नान्वयस्तथेत्यर्थः। “यौगिकत्वेतु” समासस्येति शेषः।

बोधकान्य-विभक्तेः (क) स्वार्थानुभावकतायां निराकाङ्क्षत्वादेव तस्य निरस्तत्वात्, अतएव चैत्रस्य गुरुकुलं" "शरैःशातित पत्रक" इत्यादौ गुर्वादिपदस्य वृत्त्येकदेशत्वेऽपि तदर्थे षष्ठ्यर्थ-सम्बन्धस्य तृतीयाद्यर्थ-करणत्वादेश्चान्वयः सर्व्वसिद्धः। समासस्येव क्यजादि-प्रत्ययान्तस्यापि वृत्तित्वात्—

"परिष्कृतायांः सततं यस्तु वाचस्पतीयते।
सम्पदा जटया वापि पुत्रीयति स पुरुषः"॥

इत्यादेरपि वागाद्यंशे परिष्कृतादेः पुत्राद्यंशे च सम्पदादेः सह-भावादि-बोधकतायां न सामार्थ्यं। अतएव—

(ख) "प्रतियोगि-पदादन्यद् यदन्यत् कारकादपि।
वृत्तिशब्दैक-देशार्थे न तस्यान्वय इष्यते" (१)॥

इत्यपि पठन्ति, (ग) "कर्म्म-चाण्डाल-योगोत्थं कुरु पापक्षयं

---

(१) वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते इति कातन्त्र परिशिष्टे पाठः।

---

(क) "स्वार्थे"त्यत्रस्वपदं विभक्ति-परं। "तस्ये"ति, पत्न्या द्विजातिस्वाध्याय इत्यादौ पत्नी-सहभावाद्यन्वयस्य, "निरस्तत्वा"दिति, निरासादित्यर्थः। वाचस्पतिर्मितया इत्यादावभेदान्वय निरासश्च सविभक्तिकनामार्थस्याभेदेनान्वये वृत्तिशब्दान्येनैव समानविभक्तिकनामान्तरेण स्वारितत्वस्य तन्त्रत्वादित्यादिना प्रागेवोक्तमित्यभिप्रायः पृः ७८, पः १३। "अतएव" सम्बन्धकारकबोधकान्य विभक्तेर्निराकाङ्क्षत्वादेवेत्यर्थः।

(ख) अत्रार्थे श्रीपतिसंवादमाह "प्रतियोगी"त्यादि "प्रतियोगिपदात्" नियतसम्बन्धि-वाचक-पदोपस्थाप्यादित्यर्थः। "कारकात्" कारकविभक्त्यन्तपदोपस्थाप्यादित्यर्थः। तथा च प्रतियोगिपदोपस्थाप्यान्यस्य कारक-विभक्त्यन्त-पदोपस्थाप्यान्यस्य चार्थस्य वृत्तिशब्दैकदेशोपस्थाप्येऽर्थे अन्वयबोधो न भवतीति फलितार्थः।

(ग) ननु कर्म्मचण्डाल योगोत्थमित्यादौ योगजन्यत्वस्य पापचयेऽभावात् पाप एवान्वयो-वाच्यस्तथा च पापस्य वृत्तिशब्दत्वेन कथं तादृशान्वय-सम्भव इत्यत आह "कर्म्मचाण्डाले"त्यादि। "योग-प्रयोज्य"मिति, तथा च पापचयस्य योगजन्यत्वबाधेऽपि योगप्रयोज्यमस्त्येव, तथा हि योगः पापे कारणं पापञ्च तत्चये हेतुरिति परम्परया प्रयोजकत्वमक्षतमिति भावः।

मणी"त्यत्र च योगोत्थमित्यस्य योगप्रयोज्यमित्यर्थः। स चाभेदेन पापक्षयेऽन्वितः—

"यस्मिन् राशिगते सूर्य्ये विपत्तिं यान्ति मानवाः।
तेषां तत्रैव कर्त्तव्या पिण्डदानादिका (१) क्रिया"॥

इति वचनन्तु अमूलं, समूलत्वे तु यस्मिन् राशौ गते सूर्य्ये इत्येव तत्र पाठ इत्यास्तां विस्तरः।

द्विगुं लक्षयति—

संख्या-शब्दयुतं नाम
तदलक्ष्यार्थ-बोधकम्।
अभेदेनैव यत् स्वार्थे
स द्विगुस्त्रिविधो मतः॥ ३५॥

(क) संख्यावच्छिन्न-शक्त-यत्-पदोत्तरत्व-विशिष्टं यन्नाम स्वार्थ-धर्म्मिकं तादात्म्येन (ख) तदलक्ष्यार्थस्यान्वय-बोधं प्रति समर्थं (ग) तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्न-स्वार्थे द्विगुरुच्यते। त्रिकटु, (घ) त्रिभुवन, चतुर्युग, चतुर्व्वर्ग, पञ्चगव्य, पञ्चामृत, षड्रस, षट्पदार्थ, सप्तर्षि, अष्टनाग, अष्टवसु, नवरस, नवग्रह, दशमूल, एकादश-रुद्र, एकादशेन्द्रिय, द्वादशादित्येत्यादिकस्तु कर्म्मधारयः शुण्ठ्यादि-पर्य्याप्त-त्रित्वावच्छिन्न-बोधकतया न पूर्व्वपदालक्ष्यार्थस्य बोधकत्वि-

(१) पिण्डदानोदक इति क्वचित्पाठः।

(क) कारिकास्थ-"संख्याशब्दे"त्यस्यार्थमाह "संख्यावच्छिन्नशक्ते"ति, पर्य्याप्तिसम्बन्धेन संख्यावच्छिन्नशक्तमित्यर्थः। विशिष्टान्तं "युत"मित्यस्य विवरणं। स्वपदं परवर्त्तिनाम-परं।

(ख) तत्पदं संख्यावच्छिन्नशक्तनाम-परं।

(ग) समासत्वे सतीतिपूरणीयं। अन्यथा पञ्च मूलानीति-विग्रहेऽतिप्रसङ्गः स्यात्।

(घ) तदलक्ष्यार्थेत्यस्य प्रयोजनमाह "त्रिकट्वि"त्यादिना।

कटु-प्रभृतिभ्यः कटुत्वयादि-सामान्यस्याप्रतीतेः। (क) पञ्चमूली-त्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषेषु तात्पर्य्यं, न तु विशेष-रूपेणापि। अत एव (ख)—

"कण्टकार्य्यादिकं स्वल्पं गाम्भीर्य्यादि च यन्महत्।
पञ्चमूलं तदुभयं दशमूलमुदाहृतम्"॥

इत्यादिकस्ताद्रूप्येण (ग) वोध-स्थलीय-प्रयोगः, "वर्षाकाले मघर्क्षेण युक्ता चापि त्रयोदशी"त्यादिवदेक-वचनस्य साधुत्व-सम्भ-वात् (घ)।

द्वयो-(ङ)रूपमित्याद्यर्थे द्विरूपादि-पदं नाभेदेन द्विप्रभृतेरनु-भावकम्। (च) एकत्व-संख्यया विशिष्टं वोधयदपि एक-पदं न पर्य्याप्ति-संसर्गेण तदवच्छिन्नस्य वोधकं, (छ) द्वितयादि-पदं पर्य्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं वाक्यत्वात्, अतो नैक-घट

---

(क) लक्ष्ये लक्षणं सङ्गमयति "पञ्चमूली"त्यादिना। अत्र पञ्चपदशक्त्या सामान्यतः पञ्चत्वविशिष्टोपस्थितावपि तात्पर्य्यवशाद्विशेष-भानं, एवञ्च यत्र सामान्यरूपेण संख्यावाचकपदादुप-स्थितिस्तत्रैव द्विगुर्विशेषरूपेणोपस्थितौ तु कर्म्मधारय एवेति भावः।

(ख) तात्पर्य्यविशेषस्य नियामकत्वादेवेत्यर्थः।

(ग) "ताद्रूप्येण" विशेषरूपेणेत्यर्थः। कण्टकार्य्यादि-पर्य्याप्त-पञ्चत्वेनेति तु फलितार्थः। पञ्चमूलमित्यत्र पञ्चपदेन सामान्य-पञ्चत्वावच्छिन्नस्योपस्थितौ स्वल्प-महतोरुभयोरेवैक-धर्म्मावच्छिन्न-तया भेदापेक्ष्योभयत्वासम्भवेन तदुभयं पञ्चमूलमिति वोधानुपपत्तिर्विशेष-पञ्चत्वेनोपस्थितौ च तयोः परस्परं भेदवत्त्वेन न काचिदनुपपत्तिरिति भावः।

(घ) पञ्चमूलमित्यत्र कर्म्मधारयाङ्गीकारे एकवचनासङ्गतिरित्यत आह "वर्षाकाल" इत्यादि। मघानां त्रयोदशीनाञ्च नानात्वेपि यथैकवचनान्तता तथात्रापीति भावः।

(ङ) तादात्म्य-निवेश-व्यावृत्तिमाह "द्वयो"रित्यादिना।

(च) पर्य्याप्तिसम्बन्धेन संख्यावच्छिन्नत्व-निवेश-प्रयोजनं दर्शयति "एकत्वे"त्यादिना।

(छ) "संख्यावच्छिन्नशक्ते"त्यत्र शक्त-पद-स्थाने प्रतिपादकेत्युक्तौ दोषमाह "द्वितयादौ"-त्यादिना। नन्वेवं द्वौ घटावितिविग्रहे द्विघटाविति कर्म्मधारयेऽतिव्याप्तिरिति चेन्न तदन्यत्वेन विशेषणीयत्वात्। वस्तुतस्तु पञ्चखट्वीतिवत् तत्रापि समहार-द्विगुरेव साधुस्तथा च द्विघट-मित्यादिरेव प्रमाणमिति।

द्वितय-पटेत्यादि-कर्म्मधारयेऽतिप्रसङ्गः। सप्तशती पश्यतामित्यादौ च यद्यपि शते धर्म्मिणि न सप्तानामभेदेनान्वयो, वाधितत्वात्; नापि सप्तपद-लक्षितस्य सप्तगुणितस्य, द्विगुत्व-हान्यापत्तेः (क); तथापि शतपदार्थैकदेशे शतत्व-संख्यायां (ख), तस्याः सप्तत्व-सम्भवादिति वदन्ति। द्विगङ्गं गच्छत इत्याद्यव्ययीभाव-वारणन्तु पूर्व्ववत् (ग)। स चायं द्विगुस्त्रिविधः तद्धितार्थो-त्तरपद-समाहार-भेदात्॥ ३५॥

तत्र तद्धितार्थ-द्विगुं लक्षयति—

तद्धितार्थान्वित-स्वार्थ
स्तद्धितार्थ-द्विगुर्मतः।
तद्धितार्थं-लाक्षणिक-
स्त्वान्यनामा त्वसर्व्वगः॥ ३६॥

(घ) यो द्विगुः स्वोत्तर-तद्धितार्थान्वितस्वार्थकः स तद्धितार्थ-द्विगुः। द्विमुद्रो वृष इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य, द्विवर्षा गौरित्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य, द्विदलं पवित्रमित्यादौ द्वाभ्यां दलाभ्यां निर्म्मितस्य, द्विगुञ्जं स्वर्णमित्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य, त्रिकाण्डः पुरुष इत्यादौ त्रिभिः काण्डैः परिमितस्य, पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्कृतस्य वोधने लुप्तस्यैव ठगादि-तद्धितस्य क्रीताद्यभिधायकत्वात्, परिशिष्टकृतां मतेनेदम्। (ङ) उक्तप्रयोगेषु

(क) पूर्व्वपदालक्ष्यार्थबोध एव द्विगोः साधुत्वस्योक्तत्वादिति भावः।

(ख) "सप्तानामभेदेनान्वय" इत्यनेनान्वितं। "तस्याः" शतत्वसंख्याया इत्यर्थः। एकदेशान्वयरूपास्वरस-सूचनाय "वदन्ती"त्युक्तम्।

(ग) कर्म्मधारय-लक्षणवदत्राप्यव्ययीभावान्यत्व-विशेषणात्तद्वारणमित्यर्थः।

(घ) स्वपदं लक्ष्यत्वेनाभिमतपरं। वहुपञ्चमूलीत्यादौ वहुच्प्रत्ययान्वयि-समाहार-द्विगुवारणाय "स्वोत्तरे"ति। तस्य समाहार-द्विगुत्वानङ्गीकारे तदुत्तरं 'ई'प्रत्ययाभाव-प्रसङ्गादिति भावः।

(ङ) कारिकापरार्द्धं व्याख्यातुमुपक्रमते "उक्तप्रयोगेष्वि"त्यादिना "प्रयोगाच्चे"त्यन्तेन, पृः ९९, पः ७। असर्व्वगत्वे हेतुमाह "पाञ्चपुरुषि"रित्यादि पृः ९९, पः ३।

द्विगोर[illegible] क्रीतादि-रूपार्थो लभ्यते, न तु लुमष्ठगादि-रप्यपेक्ष्यतेऽतस्तद्धितार्थ-स्वान्त्यनामको द्विगुरेव तद्धितार्थ-द्विगुरिति फणिभाष्यन्तु न युक्तम् असवर्गत्वात्; पाञ्चपुरुषिरित्यादौ पञ्चानां पुरुषाणामपत्यस्य पञ्चगर्गरूप्यो गौरित्यादौ पञ्चानां गर्गाणां भूतपूर्व्वस्य वोधने तद्धितेनैव स्वार्थस्यापत्य-प्रभृतेरुपस्थापनात्। द्विस्वर्ण-मुद्रः ( क ) पशुरित्यादावुत्तर-पदस्य शक्तिविरहेण क्रीताद्यर्थे लाक्ष-णिकत्वायोगाच्च ॥ ३६ ॥

उत्तरपद-द्विगुं लक्षयति—

स्वान्तर्निविष्ट-शब्दाभ्यां
शब्दान्तर-समासगः।
यो द्विगुः शाब्दिकैरुक्तः
स उत्तरपद-द्विगुः ॥ ३७ ॥

यो द्विगुः स्व-घटक-नामभ्यां सह साकाङ्क-( ख ) नामान्तरेण समासस्यान्तर्गतः स उत्तरपद द्विगुः। यथा पञ्च गावो धनमस्येत्यादि-विग्रहे पञ्चगवधनः पुरुष इत्यादौ वहुव्रीह्यादि–निविष्टः पञ्च-गवादिः ॥ ३७ ॥

समाहार-द्विगुं लक्षयति—

स्वार्थान्वित-समाहार-
लक्षक-स्वान्त्य-शब्दकः।
उक्ताभ्यामितरः किं वा
समाहार-द्विगुर्द्विगुः ॥ ३८ ॥

---

( क ) ननु पाञ्चपुरुषिरित्यादौ पुरुषपदेनैव लक्षणया पुरुषापत्यादेरुपस्थापनात्तदेकदेश-पुरुषे व्युत्पत्तिवैचित्र्येण पञ्चपदार्थस्यान्वय-सम्भवादिञादि-प्रत्ययस्याकाङ्क्षा-सम्पादकत्वान्नाव्याप्तिरत आह "द्विस्वर्णमुद्र" इत्यादि। स्वर्णमुद्रेत्यस्य वाक्यतया शक्तिविरहादिति भावः।

( ख ) तृतीयार्थ-सहान्वयानुपपत्त्या साकांक्षेति पूरितं।

स्वोपस्थाप्यार्थस्य समाहार-लक्षको यदीयान्त्य-शब्दः स द्विगुः समाहार-द्विगुः। पञ्चपुलीत्यत्र हि योग-लभ्यानां पञ्चाभिन्न-पुलानां समाहारः परस्थ-पुलशब्देन लक्ष्यते, न तु तत्र (क) द्विगोः शक्तिरन्यलभ्ये शक्त्ययोगात् (ख)। अतएव (ग) न लक्षणाऽपि, शक्य-सम्बन्धस्यैव लक्षणात्वेन वाक्ये तदसम्भवात्।

यदि च पञ्चपुलीत्यतः पञ्चानां पुलानामिव बोधो, न तु तत्समाहारस्यापि, अतएव (घ) पञ्चपुलीं छिनत्तीत्यादिकः प्रयोगः प्रमाणम्, अन्यथा समूहात्मनः समाहारस्य छिदाद्यसम्भवेन तद-योग्यत्वापत्तेः, पुलादेर्द्वित्व-बहुत्वेऽप्येक-वचनन्त्वानुशासनिकं, दारा-देर्बहुवचनवदुपपद्यते। न च द्रव्यप्राधान्ये पञ्चखट्वीत्यादौ ह्रस्वो न स्यात्, गोशब्दस्येव स्त्री-प्रत्ययस्यापि समासान्तस्योपसर्ज्जनस्यैव तद्वि-धानादिति वाच्यं समाहार-संज्ञक-द्विगोरप्यन्त्यस्य स्त्री-प्रत्ययस्य पृथ-गेव ह्रस्वविधेर्वक्तव्यत्वात्, प्रयोगानुसारित्वात् कल्पनायाः। (ङ) पञ्च-पाचकीत्यादावव्याप्तिश्च, तत्रोत्तरपदस्य वाक्यत्वेन लक्षकत्वायोगादिति सूक्ष्ममीक्ष्यते तदा पूर्व्व-निरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्न-द्विगुरेव समाहार-द्विगुर्बोध्यः। एवं च (च) द्विगोः कर्म्मधारयान्त-र्गतत्वेऽपि न क्षतिरिति तु विभावनीयम् (छ)॥ ३८॥

---

(क) पञ्च-पुलसमाहारे इत्यर्थः।

(ख) पञ्च-पुलशब्दावयवद्वयस्योपस्थिते पञ्चपुलशब्दस्य शक्तिविरहादित्यर्थः। अन्य-लभ्यत्व-मुपलक्षणं, वाक्यत्वादपि पञ्चपुलशब्दस्याशक्तत्वमिति ध्येयम्।

(ग) "अतएव" वाक्ये शक्त्यभावादेवेत्यर्थः।

(घ) "अतएव" समाहारस्याबोधनादेवेत्यर्थः।

(ङ) ननु पृथक्-ह्रस्वविधिकल्पने गौरवं, तद्वरं समाहार-लक्षणैव ज्यायसीत्यत आह "पञ्चपाचकी"त्यादि।

(च) समाहारस्याबोधने चेत्यर्थः।

(छ) संख्यावाचक-नामार्थ विषयक--बोधजनकत्वरूपोपाधिभेदमादायैव षड्धाविभागोप-पत्तिरिति विभावना-बीजम्।

तत्पुरुषं लक्षयति—

यदीयेन सुबर्थेन
युत-यद्बोधन-क्षमः ।
यः समासस्तस्य तत्र
स तत्पुरुष उच्यते ॥ ३८ ॥

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वय-बोधं प्रति यः समासः स्वरूप-योग्यः स तदर्थस्य तदर्थे तत्पुरुषः । (क) न तु यन्नामोत्तरं यन्नाम यदर्थ-गत-सुबर्थावच्छिन्नस्य यत्-स्वार्थस्य बोधकं तदुत्तरं तन्नामैव तदर्थयोस्तत्पुरुषः, पूर्व्वकायोऽर्द्धपिप्पलीत्यादावव्याप्तेः । स्तोक-पक्तेत्यादौ क्रियाविशेषणैः कर्म्मधारय एव, महाकविर्महाविप्र इत्यादौ कवित्वादाविव प्रकृतेऽप्येक-नामार्थैक-देशे पचनादावपर-नामार्थस्या-भेदान्वय-बोधकतया तथात्व-सम्भवात् । स्तोकं पक्तेत्यादौ समस्ता-दात्म्य-वाचित्वे तु तत्पुरुषः सम्भवत्येव (ख) । क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यं, स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्तत्वात् । (ग) द्विगौ कर्म्मधारये च शाब्दि-कानां तत्पुरुषत्व-व्यपदेशः पदसंस्कारार्थौ गौणः ॥ ३८ ॥

तत्पुरुषं विभजते—

---

(क) कस्यचिन्मतं निरस्यति "नत्वि"त्यादिना ।

(ख) ननु स्तोकपक्तेत्यत्र द्वितीयार्थ-तादात्म्य-विशिष्टार्थ-बोधकतया यदि तत्पुरुषत्वं तदा नीलोत्पलमित्यादावपि प्रथमायास्तादात्म्य-वाचित्वमते तत्पुरुषत्वं स्यादिति चेन्न सुबर्थेनेत्यत्र प्रथमान्यसुबर्थेनेत्यस्योक्तत्वात् । वस्तुतः प्रथमायास्तादात्म्यं नार्थो लिङ्गार्थमात्रे तद्विधानादित्यभिप्रायेणेदम् ।

(ग) ननु द्विगौ कर्म्मधारये च सुबर्थस्याप्रकारतया तत्पुरुषत्वं न स्यात् तथा च "तत्पुरुषावुभौ" इत्यनुशासन-विरोध इत्यत आह "द्विगा"वित्यादि । "गौण" इति, एवञ्च तत्पुरुषत्व-व्यवहारात् महाराजेत्यादावदन्ततेति भावः ।

द्वितीयादि-सुबर्थस्य
भेदादेव च षड्विधः ।
क्रियान्वयी द्वितीयादे-
रर्थः प्रायोऽत्र योजितः ॥ ४० ॥

ग्रामगतः चैत्रनीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मैत्रगतिः गृहस्थित इत्यादौ सुबर्थस्य कर्म्मत्व-कर्त्तृत्वादेर्बोधभेदादेतस्य द्वितीया-तृतीयादि-तत्पुरुषत्वेन षड्भेदाः । स्व-घटकैक-पदार्थनिष्ठ-द्वितीयार्था-वच्छिन्नापरपदार्थबोधक-समासत्वादेर्धर्म्म-षट्कस्य सुवचत्वात् ।

इयांस्तु ( क ) विशेषो यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः, ( ख ) पीठं परितः पुण्येन सुखं शमाय विद्या दण्डाद्घटः गवां कृष्णा सम्पन्नक्षीरा तिलेषु तैलमित्यादि-विग्रहे तत्पुरुषस्या साधुत्वात् । ( ग ) वर्ष-सुखी लोष्ट-काणः कुण्डल-हिरण्यं ( १ ) घटाऽ-न्यः कुवेर-वलिः कर्म्म-कुशल इत्यादौ तु तत्तद्विशेष-विधेर्द्विती-यादि-तत्पुरुषः ।

ननु ग्रामगत इत्यत्र गतौ ग्राम-कर्म्मत्वस्य राजपुरुष इत्यत्र च पुरुषे राजसम्बन्धस्यावगमो न ग्रामादि-पदेभ्यो लुप्त-सुपः स्मरणात्,

---

( १ ) कुण्डल हिरण्यमिति नास्ति हस्तलिखित पुस्तके ।

---

( क ) कारिकापरार्द्धं व्याकरोति "इयां स्त्वि"त्यादिना ।

( ख ) धात्वर्थान्वय्येवेत्येवकार-व्यवच्छेद्यमाह "पीठं परित" इत्यादिना । पीठमित्यत्र कर्म्म प्रवचनीययोगे द्वितीया, पुण्येनेति हेतौ तृतीया, शमायेति तादर्थ्ये चतुर्थी, दण्डादिति हेतौ पञ्चमी, गवामिति निर्द्धारणे षष्ठी, तिले इत्यत्राधारे सप्तमी । एतासां क्रियान्वयित्वाभावान्न तदर्थ-मादाय तत्पुरुषः साधुरिति भावः ।

( ग ) कारिकास्थ-प्रायः-पद-प्रयोजनमाह "वर्षसुखी"त्यादिना । वर्षं सुखीति विग्रहः, अत्र च द्वितीयार्थो व्यापकत्वमिति । एवञ्च विशेषविधिं विना कारकविभक्त्यन्तर्भावेणैव तत्पुरुष इति नियमः ।

तल्लोपमजानतोऽप्यन्वय-वोधात् ; समृद्धं (क) ग्रामगत इत्यादितः समृद्ध-ग्रामयोरभेदान्वय-धी-प्रसङ्गाच्च ; सम्पन्नं दधि पश्येत्यादाविव तत्रापि नामार्थयोरभेदान्वय-वोधोपयुक्तस्य नाम्नोः समान-विभक्ति-प्रतिसन्धानस्याविशिष्टत्वात् । नापि (ख) ग्रामादि-पदस्य ग्राम-कर्म्म-त्वादि-लक्षकत्वात् (१), (ग) अभेदान्य-सम्बन्धेन नामार्थस्यान्वय-वोधं प्रत्यनुकूलस्य नामोत्तर-विभक्त्युपस्थाप्यत्वस्य तादृश-(घ) प्रत्ययोप-स्थाप्यत्वस्य वा गत्यादावसत्वात् । न च ग्रामादि-पदलक्षितस्य ग्राम-कर्म्मकादेरेव तत्र गत्यादौ तादात्म्येनान्वय इति साम्प्रदायिकानां मत-मेव साम्प्रतं तत्पुरुषस्यापि समस्यमान-पदार्थयोरभेदान्वय-वोधकत्वे कर्म्मधारयत्वापत्तेः । (ङ) ग्रामं गतः राज्ञःपुरुष इत्यादि-विग्रहस्य समास-तुल्यार्थकत्व-हान्यापत्तेश्चेति चेन्न प्रत्ययान्त-तत्तन्नामार्थस्यैव भेदेनान्वयवोधं प्रति तत्तन्नामोत्तर-प्रत्ययोपस्थाप्यतायास्तन्त्रत्वोपगमेन ग्राम-गत इत्यादौ ग्रामादि-पदलक्षितस्य ग्रामकर्म्मत्वादेर्गत्यादौ

---

(१) लक्षकत्वमिति क्वचित्पाठः

---

(क) ननु तल्लोपमजानतोऽन्वयवोध एव न भवतीति यदि ब्रूयात्तदाप्याह "समृद्ध"-मित्यादि। न च ग्रामेत्यस्य वृत्तिशब्दैकदेशत्वेन कथं तस्मिन् समृद्धान्वय इति वाच्यं सविभक्तिक-नामार्थ-धर्म्मिकान्वय एव वृत्तिशब्दैकदेशान्य-सविभक्तिकनामोपस्थाप्यत्वस्य तन्त्रत्वात्। योगरूढ़-विचारे "सविभक्तिके"त्यादि-पृः ७८, पः ११ ग्रन्थस्यापीदृशार्थकतयैव व्याख्येयत्वात्। यद्वा यथा ग्रामपदोत्तरं विभक्तेः स्मृतिस्तथा विग्रहस्थ-ग्रामपदस्यापि स्मृतिसम्भवात्तेन सममन्वये वाधका-भावादिति।

(ख) पुनः शङ्कते "नापी"त्यादिना। "ग्राम-कर्म्मत्वादेरवगम" इति पूर्व्वोक्तेन "लक्ष-कत्वा"दित्यन्तस्यान्वयः, तथा च लुप्त-विभक्तेः समासस्थलेऽस्मरणेपि न क्षतिरिति भावः।

(ग) पुनः शङ्कां निरस्यति "अभेदा"त्यादिना।

(घ) पौर्वं इत्यादौ तद्धितार्थे भेदसम्ब न्धेनान्वयादाह "तादृशे"त्यादि।

(ङ) ननु कर्म्मधारयलक्षणे किञ्चिद्विशिष्ट-सुबर्थानवच्छिन्नत्व-विशेषणात्तद्वारणमित्युक्तावपि दोषमाह "ग्रामं गत" इत्यादि। "तुल्यार्थकत्वहान्यापत्ते"रिति, विग्रहजन्य-वोधे ग्राम-कर्म्म-कादेरप्रकारत्वादिति भावः।

...बाधकाभावात्। न चैवं गतोग्रामेत्यत्रापि ग्रामपदलक्षितस्य ग्राम-कर्मत्वादेर्गत्यादौ भेदेनान्वयबोध प्रसङ्गः (क), प्रत्ययान्तान्य-तत्तन्नामोपस्थाप्यार्थस्यान्वय-बोधसामान्यं (ख) प्रत्येवोत्सर्गतस्तादृश तत्तन्नामोत्तर-नामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात्। अतएवा-(ग) र्द्धपिप्पलीछेद (घ) इत्यादौ पूर्व्वपद-प्रधानत्वेनानुशिष्टस्य तत्पुरुषा-देरन्य-पदार्थानां पिप्पलीप्रभृतीनां अर्द्धाद्यर्थे घटपटमठानामित्यादौ च सर्व्वपदप्रधानत्वेन द्वन्द्वस्यानन्यपदार्थानां घटादीनां सुबर्थेऽन्वयः, तथा बहुगुड़ो द्राक्षेत्यादौ गुड़ादीनामपि बहुजर्थे (ङ), ईषदसमाप्तौ नाम्नः प्राग्बहुचो विधानादिति।

ननु यदि नामार्थयोरपि भेदेनान्वयो व्युत्पन्नस्तर्हि ग्रामगत इत्यादौ कर्म्मत्वादि-संसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु कृतं (च) ग्रामादिशब्दस्य ग्रामकर्म्मत्वादि-लक्षणयेति चेत् सत्यं विग्रहवाक्यानां समास-समानार्थकत्व-रक्षणाय तत्र लक्षणा-स्वीकारात्। मास्तु वा (छ) ग्रामादि-पदस्य तत्कर्म्मत्वादौ लक्षणा, कर्म्मत्वादि संसर्गेणैव ग्रामादे-र्गत्यादावन्वय-सम्भवात्तथापि न क्षतिः। ग्रामङ्गत इत्यादि-विग्रह-स्यापि कर्म्मत्वार्थक-द्वितीयाद्युपसन्धानवशादेव कर्म्मत्वादि-संसर्गेण गत्यादौ ग्रामाद्यन्वय-बोधकतया समास-समानार्थकत्व-सम्भवात्।

---

(क) तत्र ग्रामपदस्य प्रत्ययान्तत्वाभावादिति शेषः।

(ख) "बोधसामान्यं प्रति" भेदेनाभेदेन वा बोधं प्रतीत्यर्थः, "उत्सर्गतः" बाधकं विने-त्यर्थः। "तत्तन्नामे"त्यस्य प्रत्ययान्तान्य-नामेत्यर्थः।

(ग) कार्य्यकारणभावे "उत्सर्गत" इत्यस्योक्तत्वादेवेत्यर्थः।

(घ) अर्द्धपिप्पलीत्यस्य प्रत्ययान्तान्यत्व-रक्षार्थं "छेद" इति।

(ङ) अन्वय इतिपूर्व्वेण सम्बन्धः।

(च) व्यर्थमित्यर्थः।

(छ) पाचककल्पमित्यादौ पूर्व्वपदस्य वाक्यत्वेन लक्षणाया असम्भवादाह "मास्तुवे"त्यादि। "नक्षतिः" न विग्रह-समासयोस्तुल्यार्थकत्व-क्षतिरित्यर्थः। लक्षणे सुबर्थप्रकारत्वस्यानिवेशात्, तथाच "यदर्थगतेन सुबर्थेन विशिष्टस्ये"त्यस्य सुबर्थसम्बन्धेन यदर्थविशिष्टस्येत्यर्थ इति भावः।

ग्राम-( क ) मित्यादौ कर्म्मत्वादि-धर्म्मिकान्वय-वोधानुरोधेन द्वितीयादेः कर्म्मत्वाद्यर्थकत्वात्। अतएव ( ख ) अघटः पट इत्यादावन्यस्य, असुरो दैत्य इत्यादौ विरोधिनः, अनित्तुः शर इत्यादौ सदृशस्य, अब्राह्मणो वार्द्धुषिक इत्यादावप्रशस्तस्य, अनुदरमुदरन्तरुण्या इत्यादौ स्वल्पस्य वाचकेन नञ्-निपातेन स्वार्थे प्रतियोगित्वादि-सम्बन्धेनैव घटादेरनुभावनेऽपि तत्रत्य तत्पुरुषे नाव्याप्तिः। ( ग ) पटस्याभाव इत्यर्थे प्रसज्य-नञा अव्ययीभाव एव समासः प्रमाणं, तेनापटं वर्त्तत इत्याद्येव तत्र प्रयोगः, तत्पुरुषस्योत्तरपद-लिङ्गकत्व-नियमात् इति वृद्धाः। ( घ ) प्रसज्य-नञाप्यपट इत्यादिकस्तत्पुरुष एव साधुर्नाव्ययीभावः। नञ्-तत्पुरुषविधेस्तदपवादकत्वात्। अतएव ( ङ ) "वादिनामविवाद इत्यादिकः किरणावल्यादौ पुंसि प्रयोग इति तु पक्षधर-मिश्राः।

---

( क ) नन्वेवं द्वितीयादेः कर्म्मत्वाद्यर्थकत्वमफलं, सर्व्वत्रैव संसर्गविधया तद्बोधसम्भवादित्यत आह "ग्राम"मित्यादि।

( ख ) "अतएव" लक्षणे सुबर्थप्रकारत्वमनिविश्य तद्विषयत्वमात्रस्य निवेशादित्यर्थः। "अन्यस्ये"त्यादि-षष्ठ्यन्तपञ्चकस्य "वाचकेन नञ् निपातेने"त्यग्रिमेणान्वयः। "स्वार्थ"नञर्थ इत्यर्थः। लक्षणे सुबर्थप्रकारतानिवेशे अत्राव्याप्तिप्रसङ्ग इति भावः।

( ग ) ननु नञर्थस्य षड्विधत्वेन कथं पञ्चविधप्रयोगाः प्रदर्शिता इत्यत आह "पटस्याभाव" इत्यादि। एवञ्चैतल्लक्षणेऽव्ययीभावान्यत्वं निवेशनीयमिति नापटमित्यादावतिव्याप्तिरिति भावः।

( घ ) पक्षधरमिश्रमतमाह "प्रसज्ये"त्यादिना। तेषामयमाशयः अपटेत्यादेरव्ययीभावत्वे तत्र तत्पुरुषलक्षणातिव्याप्तिवारणायाव्ययीभावान्यत्व-निवेशे गौरवं, अतस्तत्र तत्पुरुषत्वमङ्गीकृत्यापट इत्यादि-पुंलिङ्गप्रयोगस्यैव साधुत्वं, एवञ्चाव्यय-पूर्व्वभागकत्वे सति स्त्रीपुंलिङ्गादिशून्य-समासत्वमित्यव्ययीभाव-लक्षणस्यापि न तत्रातिव्याप्तिसम्भावनेति ध्येयं।

( ङ ) नञ्तत्पुरुषस्य तदपवादकत्वादित्यर्थः।

युज्यते (क) चोत्तरः कल्पः। न चेदेवं (ख)—

"दृश्यन्ते राज-मातङ्गास्तस्यैवामी तुरङ्गमाः।
चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना॥"

इत्यादौ राज-सम्बन्धादे राजादि-पद-लक्षकत्वे तदेक-देशस्य राजादेस्तदा परामर्शो न स्यात्, विशेष्य-विधया वृत्त्या पूर्व्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादि-शब्दानां—

(ग) "न हि प्रजावतीयं मे त्वं तस्मै देहि कम्बलम्।
नीलो मणिर्गुणः सोऽत्र, भ्रात्रादिर्बोध्यते तदा॥"

नन्वेवं (घ) अनयैव ऋचा निषाद-स्थपतिं याजयेदिति श्रुतौ निषादानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः, परन्तु निषादः स्थपतिरित्यर्थे कर्म्मधारय एवेति सिद्धान्तो व्याहन्येत, तत्पुरुषे भक्ति-भिया हि तत्र कर्म्मधारय-स्वीकारस्तन्मूलको (ङ) निषादस्याधानेऽपूर्व्व-विद्या-प्रयुक्ति-(च)श्च कल्प्यते, कल्प्यते च निषादीय-तत्तदध्ययने निषेध-विधि-वाधात् "स्त्री शूद्रौ नाधीयेता"मिति श्रुतौ तत्तदध्ययनेतरा-

---

(क) तत्पुरुषे द्वितीयाद्यर्थस्य सम्बन्धविधया भानकल्पे युक्त्यन्तरमाह "युज्यत" इत्यादिना। "उत्तरः कल्पः" द्वितीयाद्यर्थस्य सम्बन्धविधया भान-पक्ष इत्यर्थः।

(ख) "नचेदेव"मित्यस्य उत्तरकल्पमनादृत्य पूर्व्वकल्पादरे इत्यर्थः। "तदा" तत्पदेनेत्यर्थः।

(ग) उक्तव्युत्पत्तौ श्रीपतिसम्मतं हेतुमाह "न ही"त्यादि, हि यस्मादत्र भ्रात्रादिर्न बोध्यते अत इत्यर्थः। "प्रजावती" भ्रातृजाया। "तस्मै" भ्रात्रे। "नील:" नीलगुणवान्। "सः" नीलः। "तदा" तत्पदेनेत्यर्थः।

(घ) "एवं" तत्पुरुषे पूर्व्वपदस्य लक्षणाया अनङ्गीकारे इत्यर्थः। "ऋचा" ऋङ्मन्त्रेणेत्यर्थः।

(ङ) कर्म्मधारय-स्वीकारमूलक इत्यर्थः। "आधाने" अग्न्याधाने इत्यर्थः।

(च) "अपूर्व्वविद्याप्रयुक्तिः" अप्राप्तवेदाध्ययनं इत्यर्थः। "कल्प्यते" विधिविषयतयानुमीयते इत्य

ध्ययन-परत्वं (क) धातोः, शूद्र-(ख) पदस्य त्रैवर्णिकान्योपलक्षकत्वात्; यदि च (ग) कर्म्मधारय इव तत्पुरुषेऽपि न लक्षणा तदा तत्पुरुष एव तत्रोचितस्त्रैवर्णिकस्यैव निषादीय-स्थपतित्वेन प्रामाणपूर्व्व-विद्याप्रयुक्तेस्तन्मूलक-निषेध-विधि-सङ्कोचस्य चाकल्प्यत्वादिति चेन्न (घ) तत्पुरुषे लक्षणा-पक्षेऽपि किमिति कर्म्मधारय एव तत्राभ्युपेयते न तु तत्पुरुषः? निषादानां (ङ) स्थपतिरिति व्युत्पत्त्या निषाद-स्थपति-पदान्निषाद-सम्बन्धवत्त्वेन स्थपत्यनुभव-सहस्रस्य सर्व्वसिद्धत्वेन तदनुरोधाल्लक्षणाया (च) क्लृप्तत्वेन तत्कल्पना-भयस्यासम्भवात्, (छ) न हि निषाद-स्थपत्यादिपदं निषादादि-सम्बन्धवत्तया स्थपत्यादि-बोधने निराकाङ्क्षं, तथासति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात्।

अथ (ज) बाधकं विना मुख्यार्थ एव श्रुतीनां प्रामाण्यं न तु

---

(क) निषादीय-तत्तदध्ययनेतराध्ययनपरत्वमित्यर्थः।

(ख) ननु निषादस्याध्ययनेपि न निषेध श्रुतिबाधः, स्त्री-शूद्रयोरिव तन्निषेधादत आह "शूद्र" इत्यादि।

(ग) तत्पुरुषे लक्षणाविरहपक्षे निषादस्थपतीत्यत्र तत्पुरुषाङ्गीकारे सङ्कोचादिकं न कल्प्यत इति दर्शयति "यदिचे"त्यादिना।

(घ) अत्रायं भावः तत्पुरुषे लक्षणापक्षेऽपि अपूर्व्वविद्याप्रयुक्तेर्निषेधविधिसङ्कोचस्य चाऽकल्प्यत्वेन लाघव-सत्त्वात्तत्र तत्पुरुष एवोचित इति।

(ङ) ननु तत्पुरुषे सर्व्वत्र लक्षणायाः कल्प्यत्वमेव तत्पुरुषत्याग-बीजमित्यत आह "निषादाना"मित्यादि।

(च) वेदातिरिक्तस्थले इति शेषः।

(छ) ननु निषादानां स्थपतिरित्यर्थे तादृशानुपूर्व्व्या आकाङ्क्षाविरहादेवापूर्व्वविद्याप्रयुक्त्यादिकं कल्प्यते, न तु तत्पुरुषे लक्षणाभियेत्याशङ्कायामाह "न ह्री"त्यादि। "तद्बाधकतया" तत्पुरुषबाधकतयेत्यर्थः।

(ज) लक्षणापक्षे तत्पुरुषत्यागबीजं शङ्कते "अथे"त्यादिना। "जपहोमौ च गङ्गायामनन्तफलदायकौ" इत्यादौ मुख्यार्थे श्रुतीनामप्रामाण्यादाह "बाधकं विने"ति। "प्रमाणान्तरा-

प्रमाणान्तराविषयेऽपि लक्ष्यार्थे, "मुख्ये हि शब्द-स्वरस" इत्यादि-मीमांसायास्तथैव सम्प्रतिपत्तेरिति; चेत्तर्हि (क) वाधकासत्त्वे कर्म्मधारय-विधयैव वेदानां प्रामाण्यं, न तु प्रमाणान्तराविषयेऽपि तत्पुरुषविधया, "कर्म्मधारयात् समासान्तरस्य दौर्वल्य"मित्यादि-मीमांसाया-(ख) स्तथैव सम्प्रतिपत्तेरित्यपि किन्न रोचये: (ग)? तत्पुरुषाद् वहुव्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव (घ) रीतिरनुसर्त्तव्या, न हि (ङ) वहुव्रीहौ समस्त-पदानां लाक्षणिकत्वादेव ततो दुर्व्वलत्वम्, एक-पदमात्र-लक्षणयापि वहुव्रीहेर्व्यवस्थाप्यत्वादित्यास्तां विस्तर: ॥ ४० ॥

अव्ययीभावं लक्षयति—

उत्तरार्थान्वित-स्वार्था-
व्यय-पूर्व्वस्तु यो भवेत्।

---

वषये" एतद्वाक्यातिरिक्त-प्रमाणाविषये इत्यर्थ: "मीमांसाया:" मीमांसाग्रन्थादित्यर्थ:। "तथैव" मुख्यार्थे श्रुतीनां प्रामाण्यमित्यस्यैवेत्यर्थ:।

(क) प्रतिवन्धिमुद्रया समाधत्ते "चेत् तर्ही"त्यादिना। तथा च वाधकासत्त्व एव कर्म्मधारय:, अचलपूर्व्वविद्याप्रयुक्त्यादि-कल्पनारूप गौरव-सत्त्वान्न तत्सम्भव इति भाव:।

(ख) "तथैव" वाधकासत्त्वस्थले कर्म्मधारय-विधयैव वेदानां प्रामाण्यमित्यस्यैवेत्यर्थ:। "सम्प्रतिपत्ते:" तात्पर्य्यादिवशेन वोधनादित्यर्थ:।

(ग) शूद्रस्य वेदपाठनिषेधादीश्वर-निषादोऽधिकारीति वोधयितुं न शक्यते इति मुख्ये वाधकसत्त्वान्न कर्म्मधारय:। न चेश्वर निषादे विधिवलाद्वेदपाठ-निषेधो वाध्यत इति वाच्यं षष्ठ्यर्थ-लक्षणया वाधाभाव-सम्भवेन निषेधक-वेद-वाध कल्पनाया अन्याय्यत्वात्। तथा च "मुख्येही"त्यादि-प्रवादस्याश्रद्धेयत्वादपूर्व्वविद्याप्रयुक्तिकल्पनागौरवाच्च तत्र तत्पुरुष एवोचित इति गूढ़ाभिप्राय:। निषादस्थपतिरित्यत्र श्रुतौ षष्ठीतत्पुरुषपक्ष: तत्त्वचिन्तामणि-कृतां मीमांसाभाष्य-कृताञ्च न सम्मत:। एतत्सर्व्वं ततोऽवगन्तव्यमिति।

(घ) तथाच तेषां प्रवादो न श्रद्धेय इति, एवञ्च कल्पनागौरवादि-सत्त्वे तदेव वहुव्रीहि-त्यागे वीजं, तदसत्त्वस्थले तु तात्पर्य्यादिकमेव तत्त्यागवीजमितिरीतिरित्यर्थ इति भाव:।

(ङ) "न ही"त्यादि, तथाच वक्तुरभिप्राय एव वहुव्रीहित्यागवीजं इति भाव:।

समासः सोऽव्ययीभावः
स्त्रीपुंलिङ्ग-विवर्ज्जितः ॥ ४१ ॥

यः समासः स्वोत्तरपदोपस्थाप्येन यदर्थेनान्वितस्य यदर्थस्य वोधकाव्यय-पूर्व्वभागकः स तद्विशिष्टस्य तदर्थस्य वोधनेऽव्ययीभावः। गृहे निर्मच्छिकम् उपकुम्भमित्यादौ हि मच्छिकाया अभावः कुम्भादेश्च सामीप्यादिर्मच्छिकादिपद-प्राग्वर्त्तिना निराद्यव्ययेनानुभाव्यते, (क) अर्द्ध-शरीरमित्यादौ उत्तर-पदार्थान्वित-स्वार्थवोधकमप्यर्द्ध-पदं नाव्ययं, (ख) निर्मच्छिका भूमिः निर्मनुष्यो देश इत्यादौ तु मच्छिकादेरभाववन्तं वोधयन्नपि निर्मच्छिकादिकस्तत्पुरुषो न तादृशार्थे स्त्री-पुंलिङ्गकार्य्यविधुर इति तत्र न प्रसङ्गः। ४१।

(ग) नन्वे-कस्याक्षस्य शलाकाया वा द्यूतेऽन्यथा पातनमित्यर्थेऽक्ष-परि शलाका-परि इत्याद्यव्ययीभावेऽव्याप्तिस्तस्याव्यय-गर्भत्वेऽपि तत्-पूर्व्वकत्वाभावात्, (घ) एवं द्वौ गार्ग्यावित्यर्थे द्विगार्ग्यं गच्छत इत्यादौ द्वाभ्यां दण्डाभ्यामित्यर्थे द्विदण्डि प्रहरतीत्यादौ तिसृणां यमुनानां समाहार इत्यर्थे त्रियमुनं स्नातीत्यादौ लोहिता गङ्गा यस्मिन्नित्यर्थे लोहितगङ्गं देश इत्यादौ दण्डेन मिथः प्रहृत्य वृत्तमित्यर्थे दण्डादण्डि रण इत्यादौ केशेषु मिथः प्रगृह्य वृत्तमित्याद्यर्थे केशाकेशि युद्धमित्यादौ खले यवा यदा संहृता यवा यदा तिष्ठन्तो गावो यदेत्याद्यर्थे खलेयवं संहृतयवं तिष्ठद्गु वा काल इत्यादौ

---

(क) अव्यय-पूर्व्वभागकेत्यस्य व्यावृत्तिमाह "अर्द्ध"त्यादिना।

(ख) स्त्रीपुंलिङ्गविवर्ज्जितेत्यस्य व्यावृत्तिमाह "निर्मच्छिके"त्यादिना।

(ग) लक्षणान्तरवीजमुपन्यस्यति "नन्वि"त्यादिना।

(घ) ननु अव्ययगर्भत्वमेव निवेशनीयं, न तु तत्पूर्व्वकत्वमतो न दोष इत्यतः पूर्व्वलक्षणे दोषान्तरमाह "एव"मित्यादिना। "एव"मित्यस्य द्विगार्ग्य-द्विदण्ड्यादिष्वपीत्यनेनाग्रिमेणान्वयः

द्विगार्ग्य-द्विदण्ड्यादिष्वपि, तेष्वव्यय-गर्भत्वस्याप्यभावादतः प्रकारान्तरेण निर्व्वक्ति—

अमादेशं विना श्रूय-
माण-षष्ठी न वोधिका।
स्वार्थे यदर्थस्य यद्वा-
सोऽव्ययीभाव इष्यते ॥ ४२ ॥

अमादेशं विना श्रूयमाण-षष्ठी स्वार्थे (क) यत्-समासार्थस्यान्वय-वोधं प्रत्यसमर्था स एव वाव्ययीभावः। श्रूयमाणैव षष्ठी स्वार्थे समासान्तरार्थस्यान्वयवोधने समर्था न तु लुप्तापि (ख), कृतयोरुपपरि व्यर्थत्वमित्यादौ त्वव्ययीभावार्थस्य लुप्तापि, कृतयोरेकाद्यान्यथा पातनयोर्निष्फलत्वमित्यन्वये लुप्त-षष्ठ्यैव पातनस्य सम्बन्ध-प्रत्यायनात् (ग)। स्निग्धस्योपगङ्गं (घ) पावित्र्यमित्यादौ स्निग्ध-गङ्गासमीपस्य पवित्रत्वमित्याद्यन्वये समीपादेः सम्बन्धः अतयाऽप्यमादेशवशादेव षष्ठ्यानुभाव्यते इति न तत्रोपगङ्गाद्यव्ययीभावेऽव्याप्तिः। अनुगङ्गेन सञ्चारः—उपगङ्गेषु पूतत्वमुपकुम्भादानीतमित्यादावमादेशं विनापि श्रूयमाणाभिस्तृतीया-सप्तम्यादि-सुब्भिरव्ययीभावार्थस्य करणत्वाधिकरणत्वादिकं वुध्यत इति षष्ठी-पर्य्यन्तानुसरणम् ॥ ४२ ॥

वहुव्रीहिं लक्षयति—

वहुव्रीहिः स्वगर्भार्थ-
सम्बन्धित्वेन वोधकः।

---

(क) षष्ठ्यर्थे इत्यर्थः।

(ख) अन्वयवोधने समर्था इति पूर्व्वेणान्वयः।

(ग) अनेन श्रूयमाणेत्यस्य व्यावृत्तिः प्रदर्शिता। तदनुपादाने अत्युपरीत्यादावव्याप्तिः स्यादिति भावः।

(घ) अमादेशं विनेत्यस्य प्रयोजनमाह "स्निग्धस्योपगङ्ग"मित्यादिना।

निरूढ़-लक्षणया-
स्वांश-ज्ञापक-शब्दवान् ॥ ४३ ॥

समास इति प्रकृतं, तथा च स्वांशस्य (क) निरूढ़-लक्षणया ज्ञापकेन शब्देन घटितः स्व-(ख) गर्भस्य यादृशार्थस्य सम्बन्धित्व-प्रकारेणान्वय-बोधं प्रति समर्थः समासः स्वगर्भ-तादृशार्थ-सम्बन्धि-बोधने बहुब्रीहिरित्यर्थः। आरूढ़वानरो वृक्ष इत्यत्राऽरूढ़ो वानरो यमिति व्युत्पत्त्या स्वकर्म्मकारोहण-कर्त्तृवानर-सम्बन्धित्वेन वृक्षं, पीत-पयस्कं पात्रमित्यत्र पीतं पयो येन इति रीत्या स्वकरणक-पानकर्म्म-जल-सम्बन्धित्वेन पात्रं, पक्वतण्डुलश्चैत्र इत्यत्र पक्वस्तण्डुलो येनेनि दिशा स्वकर्त्तृक-पाककर्म्मतण्डुल-सम्बन्धित्वेन चैत्रं, दत्तदक्षिणो द्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानक-दानकर्म्म-दक्षिणा-सम्बन्धित्वेन द्विजं, पतितपत्रस्तरुरित्यत्र पतितं पत्रं यस्मादिति विग्रहेण स्वापादानक-पतनाश्रय-पत्रसम्बन्धित्वेन तरुं, चित्रगुश्चैत्र इत्यत्र चित्रा गौर्यस्य इति वाक्यानुसारेण चित्राभिन्न-स्व-गोसम्बन्धि-त्वेन चैत्रं, रक्तपटः काय इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्न-स्ववृत्ति-पटसम्बन्धित्वेन कायं, एवं बाणच्छिन्नकरो नर इत्यादावपि बाणेन च्छिन्नः करो येन यस्य वा इति विग्रहेण बाणकरणक-स्वकर्त्तृक-च्छिदा-कर्म्म-कर-सम्बन्धित्वादिना नरादिकं बहुब्रीहिर्बोधयतीति सर्व्वत्रैव स्वगर्भ-तत्तदर्थ-सम्बन्धित्वेन धर्म्मिणामवगमः। दक्षिण-पूर्व्वा, पूर्व्वोत्तरेत्यादि-विदिग्-बहुब्रीहि-स्थले दक्षिणया पूर्व्वा यस्या इत्यादि-विग्रहेण स्वपार्श्वस्थ-दक्षिण-सहित-पूर्व्व-सम्बन्धित्वादिना आग्नेयी प्रभृतीनां विदिशां बोधः।

अस्तिक्षीरा नास्तिक्षीरा गौरित्यादावप्यस्ति-क्षीरं यस्या इत्यादि-विग्रहेणास्तित्ववत्-स्वक्षीरसम्बन्धित्वादि-प्रकारेण गवादेरवगतिः।

(क) "स्वांशस्ये"त्यत्र स्वं बहुब्रीहिः।

(ख) स्वं अन्यपदार्थः।

इयांस्तु विशेषो यत्तन्नैकेषां (क) मतेऽस्तीत्यादिकं तिङन्त-मन्येषां (ख) तत्-प्रतिरूपकाव्ययमिति।

उप समीपे दश येषामिति समीप-गणितार्थक-षष्ठ्या विग्रहा-दुपदशाः शकुनय इत्यादौ स्वसमीप-गणित-दश-सम्बन्धित्वेन नवाना-मेकादशानाञ्च पक्षिणामवगमः। तत्र (ग) दश-शब्दस्य दशत्व-लक्षणया (घ) स्वपर्य्याप्तसंख्या-समीप-गणित-दशत्व-सम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधिका दश येषामित्यादि-विग्रहे अधिकदशाः पुरुषा इत्यादावपि स्वपर्य्याप्त-संख्याधिक-दशवृत्तिसंख्या-पर्य्याप्त्यधिकरण-दश-सम्बन्धित्वेन नवादि-पुंसां प्रत्ययः। द्वौ त्रयो वा येषामित्यन्यतरार्थक-वा-शब्देन विग्रहे "द्वित्राः पवित्राः परं" इत्यादौ द्वित्रान्यतर-पर्य्याप्त-स्वपर्य्याप्त-संख्या-सम्बन्धित्वेन द्वयोस्त्रयाणां वा पवित्राणां बोधः। पटे घटे वा घटत्वमित्याद्यनुरोधेन वाका-रस्यान्यतरार्थकताया व्युत्पाद्यत्वात्, तस्य च वृत्तौ (ङ) गतार्थ-त्वादश्रुतिः। पञ्च षड् वा येषामित्यादि-विग्रहात् पञ्चषाः पुरुषाः इत्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः।

परे तु द्वौ वा त्रयो वा येषामित्यादि-विग्रहे वा-शब्दस्य संशय-कोट्यर्थकतया द्वित्रा इत्यादि-बहुव्रीहेः स्वधर्म्मिक-संशयकोटितापन्न-द्वित्रि-सम्बन्धित्वेन द्विप्रभृति-बोधत्वमित्याहुः।

---

(क) वैयाकरणानां इत्यर्थः। एतन्मते अस्तिक्षीरेत्यादिकं न समासः इति भावः।

(ख) "अन्येषां" नैयायिकानामित्यर्थः। तयोरव्ययत्वञ्च "अस्ति नास्ति न जानन्ती"ति प्रयोगदर्शनादवगन्तव्यमिति भावः।

(ग) दुर्गसिंहमतमाह "तत्रे"त्यादिना।

(घ) स्वं अन्यपदार्थः।

(ङ) "तस्य" वाकारस्येत्यर्थः। "वृत्तौ" निरूढ़लक्षणायां इत्यर्थः। तथा च द्वित्रा-द्येकतरशब्दस्य द्वित्रान्यतर-पर्य्याप्तस्वसंख्यासम्बन्धिनि निरूढ़लक्षणायाः स्वीकारात् समासे वाकार-स्याश्रुतिरिति भावः।

द्विस्त्रयो येषामित्यादि-विग्रहे तु द्विःशब्दस्य द्विगुणित-वाचित्वेन द्विगुणित-त्रिपर्य्याप्त-स्ववृत्ति-संख्या-सम्बन्धित्वेन द्विषा रसा इत्यादौ षस्नामवगमः। (क) सुजन्तर्भावेणैव विग्रहस्य व्युत्पन्नत्वाच्च पञ्चकृत्वो दश येषामित्यर्थे पञ्चदशा इत्यादिको न समासः। (ख) सर्व्वत्रोक्त-बहुव्रीहौ राजादित्वादति चरम-स्वरादेर्लोपः।

स्वधन-(ग) सम्बन्धी चैत्र इत्यादौ स्वधनस्य सम्बन्धीति व्युत्पत्त्या स्वगर्भार्थस्य सम्बन्धित्वेन चैत्रं बोधयन्नपि तत्पुरुषो न स्वांशस्य निरूढ़लक्षणया प्रत्यायक-पदेन घटितः। तथा (घ) आधुनिक-लक्षणया स्वपटबोधकेन पटपदेन गर्भित-पटसम्बन्धीत्यादिरपि। मातृ-भक्त (ङ) इत्यादिकस्तु तत्पुरुषः स्वमातृत्वेन निरूढ़-लक्षणया बोधकेन विशेषितोऽपि न तत्-सम्बन्धित्वेन बोधकः।

न च द्वौ मुनी त्रयो वा मुनयो यस्येति वक्तृत्वार्थक-षष्ठ्या विग्रहे स्ववक्तृमुनि-द्वयादि-सम्बन्धित्वेन बोधके द्विमुनि त्रिमुनि वा ग्रन्थ इत्यादौ द्विमुन्याद्यव्ययीभावे स्वमातृ-सम्बन्धित्वेन बोधके मातृ-सम्बन्धीत्यादि-तत्पुरुषे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्।

इदमत्रावधातव्यं, चित्रगुरस्तीत्यादौ चित्राभिन्न-स्वगोसम्बन्धि-प्रभृतीनां प्रतीत्यर्थं न चित्रगु-समुदायस्य लक्षणा, तस्य वाक्यत्वेन लक्षकत्वायोगात्, वाक्ये लक्षणायाः प्रागेव (च) परास्तत्वात्। न च

(क) सुच्-प्रत्ययान्तर्भावेणैवेत्यर्थः। एवकारेण तद्धितान्तर-व्यवच्छेदः सूचितः। "व्युत्पन्नत्वाच्चे"ति चकारो अवधारणे। तथाच कल्पनायाः फलानुसारित्वान्नान्य-तद्धितान्तर्भावेण विग्रह इति। अतएवाह "पञ्चकृत्व" इत्यादि।

(ख) "सर्व्वत्र" उपदशा, अधिकदशा, द्विवा पञ्चषा इत्यादिष्वित्यर्थः।

(ग) निरूढ़लक्षणया स्वांशज्ञापकशब्दवान् इत्यस्य व्यावृत्तिमाह "स्वधने"त्यादिना।

(घ) निरूढ़ेत्यस्य प्रयोजनमाह "तथे"त्यादिना।

(ङ) स्व-घटितार्थसम्बन्धित्व-प्रकारतानिवेश-व्यावृत्तिमाह "मातृभक्ते"त्यादिना।

(च) "प्रागेव" लक्षणाविचारे इत्यर्थः। पृः ६२, पः २।

चित्रगुरित्यत्र चित्रपदमेव चित्राभिन्न-स्वगोसम्बन्धि-लक्षकं गोपदन्तु तादृशार्थे तात्पर्य्यग्राहकं लक्षणाया (क) निरूढ़त्व-सम्पादकं वेति वाच्यं चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वाद्यन्वयस्यानुपपत्तेः, प्रथमान्त-पदोपस्थाप्यस्यैव भावना-(ख) विशेष्यत्वात्, अन्यथा (ग) राजपुरुषोऽस्तीत्यादावपि राजन्यस्तित्वान्वय-प्रसङ्गात्, प्रकृत्यर्थ (घ) एव सुपः संख्याबोधकत्व-व्युत्पत्तेः, गो-पदोत्तर-प्रथमया चित्रपदोपस्थाप्ये चित्राभिन्न-स्वगोसम्बन्धिन्येकत्व-बोधनायोगाच्च।

यत्तु (ङ) गो-पदमेव तादृश-गोसम्बन्धि-लक्षकं चित्र-पदन्तु तत्र तात्पर्य्यादि-ग्राहकमिति मणिकाराद्युक्तं, तन्न युक्तं पूर्व्वपदार्थ-साकाङ्क्षस्यैव स्वार्थस्योपसर्ज्जनतायां गो-पदस्य ह्रस्व-विधानात्, चित्र-पदार्थेन समं तदर्थस्यानन्वये तदनुपपत्तेः। अन्यथा गौरस्तीत्या-दावपि चित्राभिन्न-स्वगोसम्बन्धित्वेन गो-पदस्य लक्षणायामुदन्तत्वा-पत्तेः। न च नामोत्तरवर्त्तिण एव गो-पदस्य स्वार्थोपसर्ज्जनतायां ह्रस्वविधिः, यत्र (च) गोपदेन लक्षणयोपस्थापिते चित्राभिन्न-स्वगो-सम्बन्धिन्यभेदेन चित्रपदार्थस्यान्वयः तत्र चित्र-गवोऽस्तीत्यादि-कर्म्म-धारयेऽपि गोपदस्य ह्रस्व-प्रसङ्गात्। वस्तुतः (छ) कृतपाकश्चैत्र इत्यादौ स्वकृतिविषय-पाक-सम्बन्धित्वादिना चैत्राद्यवगमः पूर्व्वपदस्य परपदस्य वा लक्षणया न सम्भवदुक्तिकस्तयोरशक्तत्वेन तद्-भानत्वा-

---

(क) तात्पर्य्यज्ञानस्याकारणत्वेऽप्याह "लक्षणाया" इत्यादि।

(ख) "भावना" आख्यातार्थ इत्यर्थः।

(ग) "अन्यथा" उक्त-नियमानङ्गीकारे इत्यर्थः।

(घ) उक्तास्तित्वान्वये इष्टापत्तावपि दोषमाह "प्रकृत्यर्थे"त्यादिना।

(ङ) चिन्तामणिकृन्मतमाह "यत्वि"त्यादिना।

(च) "न चे"त्यादि-शङ्कां निरस्यति "यत्रे"त्यादिना।

(छ) ननु निरूढ़लक्षणया स्वार्थोपसर्ज्जनतायां ह्रस्वविधानान्नैष दोष इत्यत आह "वस्तुत" इत्यादि।

योगात् (क)। न च तत्र कादि-वर्णस्य स्वरूप-(ख) शक्त-घञादि-प्रत्ययस्य वा स्वकृति-विषय-पाक-सम्बन्धिनि लक्षणा तन्निरूढत्व-सम्पादकञ्च शब्दान्तरमिति साम्प्रतं, कृतादि-पदेभ्यः स्वार्थानुपस्थितावपि तदन्वयबोध-प्रसङ्गात्, घञादि-(ग) मात्रस्य (घ) नामत्वाभावेन तन्मात्रोपस्थाप्यार्थे सुबर्थान्वयायोगात्, प्रकृत्यर्था-(ङ) वाच्छेदकतदर्थस्य पदार्थान्तरेऽन्वयबुद्धेर्व्युत्पन्नत्वाच्च, तस्माच्चित्र-गुरित्यत्र गोपदं स्वगो-सम्बन्धि-लक्षकं, तदेकदेशे च गवि तादात्म्येन चित्रपदार्थस्यान्वयः। न च गोधर्म्मिकान्वय-बुद्धौ तद्धर्म्मिक-वृत्ति-ज्ञानत्वेन हेतुत्वात् पदार्थैकदेशे गवि चित्रस्यान्वयो दुर्घटः, चित्र-(च) व्रजोऽस्तीत्यादौ गोस्थानरूपस्य व्रजस्यैकदेशे गवि चित्रस्यानन्वयेन तादृशव्युत्पत्ते-(छ) रावश्यकत्वादिति वाच्यं घटशून्यं चैत्र नप्ते-त्यादि-(ज) तत्पुरुषे भेदेनेव चित्रगु-प्रभृति-बहुव्रीहावप्यभेदेन पदार्थैकदेश-धर्म्मिकान्वयबोधस्य व्युत्पत्तिवैचित्र्येण सम्भवात् (झ), फला-

(क) "भाक्तत्वायोगात्" लाक्षणिकत्वासम्भवादित्यर्थः।

(ख) कादिवर्णस्य शक्तिग्रहकालेपि शाब्दबोधोपपत्त्यर्थमाह "स्वरूपशक्ते"त्यादि। शाब्द-बोधात् प्राक् घञादिशक्तिग्रहस्यावश्यकत्वादिति भावः।

(ग) तत्रेष्टापत्तावाह "घञादी"त्यादि।

(घ) मात्रपदेन धातु सहितस्य नामत्वं सूचितं।

(ङ) कुत इत्याकाङ्क्षायामाह "प्रकृत्यर्थ"त्यादि।

(च) एकदेशान्वयास्वीकारे युक्तिमाह "चित्रे"त्यादिना।

(छ) पदार्थः पदार्थ एवान्वेति न तु पदार्थैकदेशे इति व्युत्पत्तेरित्यर्थः।

(ज) घटशून्यमित्यत्र शून्यपदार्थोऽत्यन्ताभाववान् तदेकदेशात्यन्ताभावे प्रतियोगितासम्बन्धेन घटस्यान्वयः एवं चैत्रनप्तेत्यत्र नप्तृपदार्थो पुत्र-पुत्रः, तदेकदेशे पुत्रे जन्यत्वसम्बन्धेन चैत्रस्यान्वय इति भावः।

(झ) "व्युत्पत्तिवैचित्र्येण सम्भवा"दिति, तथा च गोधर्म्मिकवृत्तिज्ञानत्वेन कारणतायां तत्पुरुष-बहुव्रीह्यतिरिक्तस्थलीयत्वेनाव्यवहितोत्तरत्वान्तर्भावेण वा कार्य्यतावच्छेदक-सङ्कोचः कर्त्तव्य एवञ्च तत्पुरुष-बहुव्रीह्यघटकपदार्थः पदार्थ एवान्वेति न तु पदार्थैकदेशे इति व्युत्पत्तिः स्वीकार्य्येति भावः।

नुरोधित्वात् कल्पनायाः। (क) प्राच्यैरपि सुन्दर-राजपुरुष इत्यादावभेदेन सुन्दरादेः पदार्थैकदेशे राजन्यन्वयबुद्धेः स्वीकाराच्च।

यत्तु गोपदं तत्र स्वकीय-गोत्वेन सम्बन्धित्वेन च लक्षकमतश्चित्रस्य गोपदार्थ एव स्वकीये गवि तस्य च (ख) सम्बन्धिनि अन्वयान्न पदार्थैक-देशान्वयित्वमेक-(ग) पदार्थयोश्च मिथोऽन्वयः कृति-वर्त्तमानत्वयोरिव नाव्युत्पन्न इति तन्मन्दं तथा सति "चित्रगुः पुरुषस्तस्याः सञ्चारोऽतिमनोहर" इत्यादौ तदादेः स्वकीयगवादि-परामर्शकत्वापत्तेः पदार्थैकदेशस्यैव परामर्शकतायाः तदादावव्युत्पन्नत्वादिति। एवञ्चा-(घ) रूढ़-वानरो वृक्ष इत्यादावपि रुह-धातुना स्वकर्म्मकारोहणस्य क्तेन कर्त्तुः वानरपदेन च वानर-सम्बन्धिन उपस्थापनादमीषामाकाङ्क्षादि-धीसाचिव्यादेव स्वकर्म्मकारोहणकर्त्रभिन्न-वानर-सम्बन्धित्वादिना वृक्षादेर्बोध इत्यास्तां विस्तरः॥ ४३॥

न चारूढ़ो वानरो यस्य (ङ) वृक्षमित्यादि-विग्रहादारूढ़-वानरपदं स्वकीय-वृक्षारूढ़-वानर-सम्बन्धित्वेन ग्रामादिकं बोधयदपि बहुव्रीहिः स्यादतस्तादृशवाक्यस्य विग्रहत्वं खण्डयन्नाह।

अस्यैकं प्रथमान्तं सत्
सुबन्तैरितरैः सह

---

(क) भेदसम्बन्धेनैकदेशान्वय-स्वीकारेऽपि अभेदसम्बन्धेनान्वयो न स्वीक्रियते इति यदि ब्रूयात्तदाप्याह "प्राच्यै"रपीत्यादि। प्राचीनमते राजपुरुष इत्यादौ राजपदादेराजसम्बन्धि लाक्षणिकतया राजादेः पदार्थैकदेशत्वादिति भावः।

(ख) गोश्चेत्यर्थः।

(ग) एकपदार्थयोः स्वकीयगो-सम्बन्धिनोः कथं परस्परमन्वय इति शङ्कायामाह "एके"-त्यादि, यथा पचतीत्याख्यातार्थकृति-वर्त्तमानत्वयोः परस्परमन्वयस्तथात्रापीति भावः।

(घ) बहुव्रीहावेकदेशान्वयस्य युक्तिसिद्धत्वे चेत्यर्थः।

(ङ) "यस्ये"ति ग्रामस्येत्यर्थः। "विग्रहत्व"मिति समासार्थ-बोधकत्वमात्रमित्यर्थः, न तु समास-प्रयोजकविग्रहत्वं, बहुव्रीहेर्नित्य-समासत्वेन तत्र तादृश-विग्रहाभावात्।

यदा भेद-सुबन्तेन
साकाङ्क्षं नाम विग्रहः ॥ ४४ ॥

अस्य बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सत् सुबन्तैरितर-नामभिः सह भेदार्थक-सुबन्तेन यच्छब्देन साकाङ्क्षं विग्रहः कथ्यते, न चोक्त-वाक्ये तथा, सुबन्तस्यापि यदस्तत्र वृक्ष-पदेनैव साकाङ्क्षत्वात्, आरूढ़ो (क) वानरो य इत्यादौ तु यच्छब्दो न भेदार्थक-सुबन्त इति न तादृशस्यापि वाक्यस्यार्थे बहुव्रीहिः। पतितस्य धनं यस्य दण्डाद्घटो यस्मादित्यादिकस्तु-समानार्थक सुब्द्वयोमन्तर्भाव्य न बहु-व्रीहि-विग्रहः सम्प्रदाय-विरोधात् (ख)।
एवं घटेन पटो यत्रेत्यादिकः सहाद्यर्थमन्तर्भाव्यापि (ग), सुबन्तै-रिति तु सम्भवाभिप्रायं (घ) तेनाघटो देश इत्यादि-बहुव्रीहेर्न घटो यत्रेत्यादि-विग्रहे नञादेः सुबन्तत्वाभावेऽपि नाव्याप्तिः। सपुत्र इत्यादौ तु (ङ) सह पुत्रो येनेत्यादिरेव विग्रहः, न तु पुत्रेण

---

(क) "भेदार्थके"त्यस्य प्रयोजनमाह "आरूढ़" इत्यादि। अन्यबोधक प्रथमान्तपद-प्रकाश्यार्थक बहुव्रीहेरस्वीकारादिति भावः।

(ख) तथा च प्रथमान्य-समानार्थक-सुब्द्वयाघटितत्वं निरुक्त-विग्रहलक्षणे विशेषणं देयं। समानाधिकरणबहुव्रीहिविग्रहस्य समानार्थक-प्रथमाद्वयघटितत्वात्तत्राव्याप्तिवारणाय प्रथमान्येति। समानार्थकत्वञ्च तुल्यार्थकशब्दोत्तरत्वेसति समानानुपूर्व्वीमत्त्वं, तथा च पतितस्य धनं यस्येत्यादौ पतितपदोत्तर-षष्ठ्याः स्वामित्वार्थानङ्गीकारेपि न तादृशविग्रहेऽतिव्याप्तिरिति भावः।

(ग) न विग्रह इति शेषः। तथा च सहाद्यर्थकसुबघटितत्वमपि विशेषणं देयं, एवञ्च घटपटोदेश इत्यादिको न प्रयोगः। दक्षिणया पूर्व्वा यस्या इत्यादि-विग्रहे अव्याप्तिवारणाय तत्तत्सुबन्यत्वेन सहार्थकसुब्विशेषणीयं विशेषविधिसत्त्वादिति भावः। वस्तुतो दक्षिणया पूर्व्वा यस्या इत्यत्र वैशिष्ट्यमेव तृतीयार्थ इति न कश्चिद्दोष इत्यभिनवः पन्थाः।

(घ) तथा च "सुबन्तै"रित्यस्य नाम-निपातान्यतरैरित्यर्थः।

(ङ) "सहपुत्रोयेने"त्यस्य यन्निरूपित-साहित्यवान् पुत्र इत्यर्थः, साहित्यञ्च सामाधि-करण्यं।

सहेत्यादिरन्य-पदार्थाप्राप्तेः ( क ), सघटो ( ख ) देश इत्यादौ च सह घटो येनेत्यादि-विग्रहे सहार्थो वैशिष्ट्यं, न तु सामानाधिकरण्यं, घटे देशस्य तद्वाधात्। जीवत्पितृक इत्यादेस्तु जीवन् पिता यस्येति विग्रहो, यस्य च पिता जीवन्नित्येवं जीवद्विधेयकान्वये निराकाङ्क्षोऽपि जीवदभिन्नः पिता यदीय इत्यन्वय एव साकाङ्क्षः।

इदन्तु वोध्यं यत्रविग्रहवाक्ये सुबन्त-यदः ( ग ) क्रिया-साकाङ्क्षत्व-सम्भवस्तत्र तदर्थान्वित-( घ ) क्रियागर्भित-पदार्थे विना वाधकं वहुव्रीहिर्व्युत्पन्नः, तेन गन्तव्यो ग्रामो यस्येति विग्रहे गन्तव्य-ग्रामकश्चैत्र इत्यादितः स्व-कर्त्तृक-गतिकर्म्म-ग्राम-सम्बन्धित्वेनैव चैत्रादेरौत्सर्गिको वोधः, कदाचित्तु ( ङ ) तात्पर्य्यादि-वशाद् गन्तव्याभिन्न-स्वकीय-ग्राम-सम्बन्धित्वेन। यत्र तु यदस्तत्-साकाङ्क्षत्वासम्भवस्तत्र विशेष-विध्यसत्त्वे यन्नामार्थ-मुख्य-विशेष्यको विग्रह-वाक्याद्बोधः सुबन्त-यदर्थान्वित-तन्नामार्थ-गर्भित पदार्थे ( च )। अतएव धनी दासो यस्येत्यर्थे यदीयधनवान् दासस्तस्य धनि-दासकोऽयमित्यादितो नावगमः, किन्तु धनवत्-स्वदास-सम्बन्धिन एव। चन्द्र-( छ ) श्चूड़ायां यस्येत्यादिकस्तु विग्रहो न यदीयश्चन्द्रश्चूड़ाया-मित्यर्थकः, किन्तु यदीय-चूड़ायां चन्द्र इत्यर्थकः, तादृशार्थ एव

---

( क ) अत्र सहशब्देन साहित्यवोधनात्तृतीयाया न तादृशार्थकत्वमतो न सहार्थकसुब-घटित्व-क्षतिरिति।

( ख ) सह शब्दस्य यत्र समानाधिकरण्य-रूपं साहित्यं नार्थस्तत्रापि वहुव्रीहिरिति दर्शयति "सघट" इत्यादिना।

( ग ) "यद" यच्छब्दस्येत्यर्थः।

( घ ) यदर्थान्वितेत्यर्थः।

( ङ ) वाधकं विने त्यस्य फलमाह "कदाचित्त्वि"त्यादिना।

( च ) वहुव्रीहिर्व्युत्पन्न इति पूर्व्वेणान्वयः।

( छ ) विशेष-विध्यसत्त्व इत्यस्य फलमाह "चन्द्र" इत्यादिना।

यस्येति (क) व्युत्पत्त्या कुटाभिन्नस्य स्व-धर्म्मिक-व्यवस्था-(ख) धर्म्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुण-संविज्ञान एव बहुव्रीहिः ॥ ४५ ॥

प्राचां मते तद्गुण-संविज्ञान-बहुव्रीहिमन्यथा निर्व्वक्ति—

य: स्वार्थ-घटकार्थस्य
स्वार्थान्वयिनि बोधने
अनुकूलो बहुव्रीहिः
स तयोरथ वादिमः ॥ ४६ ॥

यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थ-घटकस्याप्यर्थस्यान्वय-बोधने समर्थः स तयोस्तदतद्गुण-संविज्ञानयोरादिमः, लम्बकर्ण-मानय, हारग्रीवं पश्येत्यादौ हि बहुव्रीहिर्लम्ब-स्वकर्ण-सम्बन्धिनः स्वग्रीवावृत्ति-हार सम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्म्मत्वादौ स्वार्थ-घटकी-भूतस्य तादृश-कर्ण-हारादेरपि व्युत्पत्तिवैचित्र्येण-(ग) न्वय बोधने समर्थ इत्येवं विध एव तद्गुण-संविज्ञानस्तद्भिन्न एव चार्थाद-तद्गुण-संविज्ञानो यथा दृष्ट-सागरमानय इत्यादिरिति प्राचां-मतम् ॥ ४६ ॥

व्युत्पत्ति-वैशद्यार्थमन्यथापि पुनर्विभजते—

स्वात्मनिविष्ट-हित्वादि-
नामभिर्विग्रहात् पुनः

---

(क) स्वधर्म्मिक-व्यवस्थाधर्म्मी आदिपदस्यार्थस्तथा च कूटाभिन्न-स्वधर्म्मिकव्यवस्थाधर्म्मी यत्सम्बन्धीत्यर्थः। स्वं कूटादिधातुसमूहः। सम्बन्धश्च स्वधर्म्मिकव्यवस्था-धर्म्मित्वमेव, अत स्वंकूटः।

(ख) व्यवस्था धीविशेष-विषयता-रूपा।

(ग) एक-विशेषणत्वेनोपस्थितस्य नान्यत्रान्वय इति नियमात् प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकतया कर्म्मत्वादौ धर्म्मिणि कर्णादेरन्वयासम्भवाच्चेत्यत आह "व्युत्पत्तिवैचित्र्ये"ति। तथा च तद्-गुणसंविज्ञानादन्यत्र तादृशनियमः स्वीकार्य्य इति भावः।

वहुव्रीहिर्वहुविधो
द्विपद-त्रिपदादिकः ॥ ४७ ॥

द्वि-त्रि-चतुरादिभिरेव स्व-घटक-नामभिर्विग्रह-वशात् द्विपद-त्रिपद-चतुष्पदादिको वहुव्रीहिर्वोध्यः। चित्रा गौर्यस्य इति विग्रहाच्चित्रगुरित्यादौ द्विपदस्यैव जरती चित्रा गौर्यस्य महन्नीलमुत्पलं यत्रेत्यादि-विग्रहाज्जरती-चित्रगुश्चैत्रो महन्नीलोत्पला सरिदित्यादौ त्रिपदस्यापि वहुव्रीहेरावश्यकत्वात्, जरती चित्रगवी यस्य महन्नीलोत्पलं यत्रेति द्विपद-विग्रहे जरती शब्दे पुंवद्भावस्य महच्छब्दे चाकारस्य प्रसङ्गादुत्तर-पदे (क) तयोर्विधानात्, समासान्त-पदस्य चोत्तरपदत्वात्, एकत्रद्वय-(ख) मिति न्यायेन गवि चित्र-जरत्योरभेदानुभवस्योक्त-रीत्या सम्पादयितुमशक्यत्वेन तदर्थमेव त्रिपदादि-वहुव्रीहेरावश्यकत्वाच्च ॥ ४७ ॥

द्वन्द्वं लक्षयति—

यद्-यदर्थक-यन्नाम-
व्यूहो यद्-यत्-प्रकारके।
वोधे समर्थः स द्वन्द्वः
समासस्तावदर्थकः ॥ ४८ ॥

(ग) यद्-यदर्थोपस्थापकस्य क्रमिक-यादृश-नाम-स्तोमस्य निश्चयस्तत्तदर्थ-प्रकारकान्वय-वोधं प्रति तत्त्वेन समर्थस्तादृश-नाम-

(क) परे इति शेषः।

(ख) कर्म्मधारयाघटकनामान्तराव्यवहितोत्तरपदे परे तयोर्विधानं वाच्यमतो नोक्त-दोष इत्यत आह, "एकत्रद्वय" मित्यादि।

(ग) किञ्चिद्धर्म्मावच्छिन्न-विशेष्यतानिरूपिताव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-यद्यदर्थोपस्थापक-यादृशानुपूर्व्व्यावच्छिन्न-नामस्तोमनिष्ठ-प्रकारताशालि-निश्चयस्य एकधर्म्मावच्छिन्नविशेष्यतानिरूपित-तत्तदर्थप्रकारताशालि-शाब्दवोधत्वावच्छिन्नं प्रति तत्त्वेन हेतुत्वं तादृश-नाम-स्तोमत्वं तत्तदर्थे द्वन्द्वसमासत्वमिति पर्य्यवसितार्थः। नीलोत्पलमानयेत्यादौ नीलोत्पलादि-नामस्तोमो न एकधर्म्मा-

निबद्ध एव तावदर्थको द्वन्द्व-समासः। पाणिपादं वादय धव-खदिरौ छिन्धीत्यादौ हि कर्म्मत्वाद्यंशे करचरणादि-प्रकारकान्वय-बोधं प्रत्यमादि-धर्म्मिक-करचरणाद्युपस्थापकस्य पाणि-पादादि-क्रमिक-नामस्तोमस्याव्यवहितोत्तरत्व-सम्बन्धेन निश्चयः कारणम्, अतः पाणिपादादि-समुदायः करचरणादि-तत्तदर्थे द्वन्द्वः।

यत्तु पाणि-पादमित्यादौ समाहार-द्वन्द्वे सर्व्वत्रोत्तरपदे पाणिपादादि-साहित्ये लक्षणा, अतएव (क) नित्यं तत्रैकवचनं, समाहारस्यैकत्वात्, पदान्तरन्तु तादृश-लक्षणाया निरूढ़त्व-सम्पादकं, तथाविध-साहित्यस्य च स्वाश्रय-निष्ठत्वादि-सम्बन्धेनैव द्वितीयाद्यर्थकर्म्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वमिति

---

वच्छिन्ने तावदर्थप्रकारक-बोधे समर्थः, किन्तूत्पलादिधर्म्मिक-नीलादिप्रकारक-बोधे। तथा हि नीलोत्पलमित्यादितः कर्म्मत्वादौ नीलप्रकारतानिरूपित-विशेष्यत्वाभिन्नोत्पल-प्रकारताकबोधो जायते, न तु नीलोत्पलोभयप्रकारताकः। न चैवमपि जरतीचित्रगुश्चैत्र इत्यादौ जरतीचित्रेति भागेऽतिव्याप्तिर्गोपदार्थे चित्रजरदुभय-प्रकारकान्वयबोधसमर्थत्वादितिवाच्यं सुबादिधर्म्मिकजरतीचित्रगुनिश्चयत्वेनैव हेतुत्वस्य कल्प्यतया गुधर्म्मिक-जरतीचित्रनिश्चयत्वेन हेतुत्वस्याकल्पनात्, तत्कल्पने केवलादपि जरतीचित्रगु-पदात्तादृशबोधापत्तेः। न च सुबादिधर्म्मिक-जरतीचित्रगुनिश्चये गु-धर्म्मिक-जरतीचित्रनिश्चयोऽप्यस्तीत्यतिव्याप्तिरितिवाच्यं धवखदिरपलाशानीत्यत्र धवखदिरभागवारणाय जनकतावच्छेदकता-पर्य्याप्ति-निवेशस्यावश्यकत्वेन तत एव तद्वारणात्। यद्यदर्थ-प्रकारतायां सुबर्थविशेष्यताकत्वं निविश्यैव वा जरतीचित्रेत्यादि-वारणं कर्त्तव्यं। पाणिं पादमित्यादि-विग्रह-वारणायाव्यवहितोत्तरत्व-सम्बन्धावच्छिन्नत्वं नाम-प्रकारता-विशेषणं। न च पाणिं पादमिति प्रत्येकाकाङ्क्षा-ज्ञानकारणतायाः क्लृप्तत्वेन पाणिं पादमिति समुदायाकाङ्क्षा-ज्ञानकारणतायां मानाभावस्तथा च तत्रातिव्याप्ति-शङ्कैव नास्तीति वाच्यं प्रत्येकाकाङ्क्षा-ज्ञानमात्रस्य कारणतायां पाणीया कर्म्मता पादीया कर्म्मता इति खण्डबोध एव स्यान्न त्वेकत्व द्वयमितिरीत्या, तथा चैकत्व द्वयमितिरीत्या पाणिपादीया कर्म्मतेति-बोधार्थं पाणिं पादमिति समुदायाकाङ्क्षाया अवश्याभ्युपेयत्वात्। पाणिपादं घटश्चेति समूहालम्बनानुपूर्व्वी-ज्ञानस्यापि पाणिपादप्रकारकबोधजनकतया पाणिपादं घटश्चेति समुदायातिव्याप्ति-वारणाय तत्त्वेनेति, उक्त समूहालम्बनस्य तादृशबोधजनकत्वन्तु पाणिपादनिश्चयत्वेनैव, न तु पाणिपादघट-निश्चयत्वेनेति नातिप्रसङ्ग इति।

(क) साहित्ये लक्षणास्वीकारादेवेत्यर्थः।

प्राचीनैरुक्तं, तत्र युक्तं तुल्यवदेक-क्रियान्वयित्वं (क) बुद्धि-विशेष-विशेष्यत्वं वा पाणिपादयोः साहित्यं, तस्य च नानात्व-सम्भवेन तद्-गत-द्वित्वादि-बोधार्थं समाहार-द्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्व्वार-त्वात्। साहित्यस्य द्वित्व-बहुत्वेऽपि न समाहार-द्वन्द्वस्य द्विवचनादि-साकाङ्क्षत्वं तादृश-द्विगुरिवेति (ख) चेत् तर्हि पाणिपाद-प्रभृतीनां नानात्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तु-मुचितं कृतं साहित्य-भक्त्या (ग), हस्त्यश्वं धनमित्यादेरयोग्यताया दुर्व्वारतापाताच्च, साहित्यस्य स्वाश्रयत्वादि-सम्बन्धेन धनादावन्वया-योगात् (घ), तादृश-(ङ) साहित्ये धनादेरभेद-विरहाच्च। समाहार-(च) परिभाषा तु क्लीवलिङ्गत्व-नित्यैक-वचनत्वादि पद-संस्कारोपयोगितयैवोपपन्ना, न द्वन्द्वस्यार्थ-व्यवस्थापिका (छ)। एतेन (ज) धव-खदिरावित्यादावितरेतर द्वन्द्वेऽप्युत्तरपदे धव-खदिर-साहित्याश्रये लक्षणा, अन्यथा (झ) द्विवचनादेः प्रकृत्यर्थता-वच्छेदकवत्येव पर्य्याप्ति-सम्बन्धेन स्वार्थ-द्वित्वाद्यनुभावकत्व-व्युत्पत्ते-र्धव-खदिरावित्यतो धवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेरिति मीमांसकनाम् मतमप्यपास्तं, तुल्यवदेक-क्रियान्वयित्वं धव-खदिर-

(क) "तुल्यवदेकक्रियान्वयित्वं", एकजातीय-क्रिया-निष्ठेक-जातीय-संसर्ग-निरूपकत्व-मित्यर्थः।

(ख) "द्वन्द्वैकत्वं" "तथाद्विगु"रित्यनुशासनेन तथैव कल्पनादिति भावः।

(ग) लक्षणयेत्यर्थः।

(घ) नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादिति भावः।

(ङ) अभेदान्वये बाधकमाह "तादृशे"त्यादिना।

(च) समाहार-परिभाषायाः फलमाह "समाहारे"त्यादिना।

(छ) समाहारार्थत्वस्य ज्ञापिकेत्यर्थः।

(ज) वक्ष्यमाणदोषेणेत्यर्थः।

(झ) लक्षणानङ्गीकारे इत्यर्थः।

विशेष्यक-धी-विशेष-(१) विशेष्यत्वं वा धव-खदिरयोः साहित्यं, तदाश्रयश्च धवद्वयादिकमपीति तादृश-साहित्याश्रय-लक्षकत्व-पक्षेऽपि धव-खदिरावित्यतो धवद्वयादि-बोधस्य दुर्व्वारतापत्तेः। न च चितया-विशेष्यक-धव-खदिर-धर्म्मिक-धी-विशेष्यत्वमेव प्रकृते धव-खदिरयोः साहित्यं तच्च न धवद्वयादेरिति वाच्यं तादृश-साहित्यान्वयस्यानुभवे-नास्पर्शात्। तस्माद् यत्र नानाधर्म्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्त-द्धर्म्मावच्छिन्ने समुदित एव पर्य्याप्ति-सम्बन्धेन द्वित्वादि-बोधने द्विवच-नादिकं साकाङ्क्षं, न तु तादृशैकधर्म्मावच्छिन्नं परित्यज्य तथाविधा-परधर्म्मावच्छिन्ने, यतो धव-खदिरावित्यादितो धवयोः खदिरयोश्च बोध प्रसङ्ग इति तत्त्वम्।

(क) घट-घटेत्यादिकस्य घटकलसेत्यादिकस्य घट-तद्घटेत्यादि-कस्य च क्रमिक-नाम-स्तोमस्य निश्चयत्वेन घटादेरन्वय-बोधं प्रत्य-हेतुत्वमतो न तादृङ्नाम-निबद्धो घटाद्यर्थे द्वन्द्वः। (ख) अतएव समस्यमान-पदार्थयोस्तत्त्वावच्छेदकयोर्वा यत्र मिथो भेदस्तत्रैव द्वन्द्वस्य साधुत्व-सूचनाय "चार्थे (ग) द्वन्द्व" इति पाणिनिः प्राह। अतएव भेदगर्भ-समुच्चयार्थकं च-शब्दमन्तर्भाव्य धवश्च खदिरश्चे-त्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः, समुपाददते च (घ) तत्र मिथो भेद-प्राप्त्यर्थञ्चकारद्वयं। पीत-तत्पटयोस्तादात्म्यमित्यादौ तत्-

---

(१) विशेषेति नास्ति हस्तलिखितपुस्तके।

---

(क) यद्यत्प्रकारकबोध समर्थत्वनिवेश-व्यावृत्तिमाह "घटे"त्यादिना।

(ख) "अतएव" घट-घटेत्यादेर्द्वन्द्वत्वाभावादेवेत्यर्थः। "तत्त्वावच्छेदकयोः" पदार्थ-तावच्छेदकयोरित्यर्थः। "अप्येकदन्त-हेरम्बलम्बोदर-गजानना" इत्यादावप्येकदन्तादि-पदाना एकदन्तादिपदवाच्यत्व-रूपेण लक्षणा, अतोऽत्रैव पदार्थतावच्छेदकभेदः। वाच्यतासम्बन्धेन तत्तत्पदविशिष्टे लक्षणेत्यपि केचित्

(ग) परस्परं विभिन्नार्थे इत्यर्थः, च-शब्दस्य भेदगर्भ समुच्चय बोधकत्वादिति भावः।

(घ) वृद्धा इति पूर्व्वेणान्वयः।

पटादेः पीताद्यभिन्नत्वेऽपि पीतत्व-तत्पटत्वाद्योः पदार्थतावच्छेदकयोरस्त्येव भेदः, सुबर्थस्तु द्वित्वं न तत्र प्रकृत्यर्थेऽन्वेति, पर्य्याप्तिसम्बन्धेन पीत-(१) तत्पटे तस्य बाधात्, सुबर्थ-द्वित्वादेस्तादृशसम्बन्धेनैव प्रकृत्यर्थ-साकाङ्क्षत्वात्, परन्तु प्रकृत्यर्थतावच्छेदकयोः पीतत्व-तत्पटत्वयोरेव, व्युत्पत्तिवैचित्र्यात् (क)। अतएव (ख) "द्व्यणुकारम्भक-संयोगनाशेभ्यः कार्य्यद्रव्यं नश्यती"ति भाष्यस्य योग्यता-सम्पत्तये सुबर्थैकत्वस्य कार्य्यद्रव्यत्वेऽन्वय-(ग) मभिधित्सुनाचार्य्येण "जात्यभिप्रायकमेकवचन"मिति गुणकिरणावल्यामभिहितम्। अतएव (घ) च "श्यालाः स्यु र्भ्रातर-पत्न्याः स्वामिनो देवृदेवरौ" इत्यत्र द्विवचन-महिम्ना स्वामिनो भ्रातरो देवृ-देवरोभयपद-वाच्या इत्यर्थः सुभूत्यादि-सिद्धः सङ्गच्छते। यदि च पटद्वयासत्त्वेऽपि पीतपटावित्यादिकः प्रयोगः स्यात् पीतत्व-पटत्वोभयाश्रयस्य तत्र सत्त्वात्, एवं (ङ) पीत-पटयोरभेद इत्यादितः शुद्ध-पटत्वादेरवोध-प्रसङ्गस्य तदर्थे (च) सुबर्थ-द्वित्वस्य प्रकारत्वादित्यादि सूक्ष्म-

---

(१) पीतेति नास्ति हस्तलिखितपुस्तके।

---

(क) पदार्थः पदार्थ एवान्वेतीति व्युत्पत्तेः सङ्कोचादित्यर्थः।

(ख) एक-पदार्थतावच्छेदके अपर-पदार्थतावच्छेदकान्वयस्याङ्गीकृतत्वादेवेत्यर्थः। "भाष्यस्ये"ति प्रशस्तपादप्रणीत-पदार्थधर्म्मसंग्रहस्येत्यर्थः।

(ग) कार्य्यद्रव्याणां नानात्वे "कार्य्यद्रव्य"मित्येक-वचनानुपपत्तेस्तत्र जात्यभिप्रायकमेकवचनमिति भावः। "आचार्य्येण" उदयनाचार्य्येणेत्यर्थः।

(घ) ननु तत्र द्रव्यपदं द्रव्यत्वपरं तस्य च स्वाश्रय-प्रतियोगिकत्व-सम्बन्धेन नाशेऽन्वय इत्येव जात्यभिप्रायकमित्यस्याभिप्राय इति यदुच्यते तदाप्याह "अतएवे"ति पदार्थतावच्छेदकेऽन्वयस्याङ्गीकृतत्वादित्यर्थः। देवृदेवर-पदस्य देवृदेवर-पदवाच्येत्यर्थः, तत्पदार्थतावच्छेदके च पदे द्वित्वस्यान्वय इति भावः। "सुभूतिः" कोष-टिप्पनीत्यर्थः।

(ङ) तत्रेष्टापत्तावाह "एवं"मित्यादि।

(च) पटत्वादिरूपार्थे इत्यर्थः।

मीय्यते तदा गोदौ ग्राम इत्यादाविव ( क ) साधुत्वार्थमेव तत्र द्विव-
चनादिकं वदन्ति ।

"विद्यति-विन्दति—विनत्तीनामनिट्" इत्यत्र विद्यत्यादि-शब्दो न विद्-धातुत्वेनोपस्थापकः ( ख ), किन्तु सत्ताद्यर्थक-तादृश-धातुत्वेनैव ।

मृगपाण्डरयोः पदार्थयोर्भेदेऽपि ( ग ) हरिण-हरिणावित्य-प्रयोगात् समान-शब्दयोर्द्वन्द्व-प्रसक्तावेकशेषो व्युत्पत्ति-सिद्धस्तेन हरिणावित्यत्र लुप्त-श्रुताभ्यामेव हरिणपदाभ्यामुपस्थितयोर्मृगपाण्डयोर्बोधः । हरी नमस्यावित्यत्रोक्तरीत्यैव हरिपदाभ्यां विष्णुचन्द्रयोरवगतिः, अन्यथा ( घ ) हरि-हरी नमस्यावित्यपि प्रयोगापत्तेः । हरी च हरयश्चेति विग्रहस्थले यत्र हरय इत्यादितः समस्यमान-पदार्थानामवान्तर-संख्यावगमस्तत्र तत्तत्संख्यावच्छिन्न-स्वार्थलक्षकस्य ( ङ ) लुप्तस्य हर्य्यादि-पदस्योत्तरत्वेन प्रतिसंहित-( च )-मेव हर्य्यादिपदं तथाविध-स्वार्थस्य ( छ ) लक्षणया बोधकं, तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुद्वयस्य सिंहत्रयस्य लक्षणया शक्ति-( ज ) भ्रान्त्यैव वा । न च विग्रहस्थ-सुबर्थस्य द्वित्वादेः समासाप्रतिपाद्यत्व-नियमात्तथाविध-

---

( क ) ग्रामवाचक-गोद-शब्दस्य द्विवचनमात्र-साकाङ्क्षत्वादिति भावः ।

( ख ) "विद्धातुत्वेनोतस्थापक" इति, तथा सत्यानुपूर्व्या ऐक्येन पदार्थतावच्छेदक-भेदासत्त्वाद द्वन्द्वानुपपत्ति-प्रसङ्गादिति भावः । "सत्ताद्यर्थके"त्यादि, तथा च सत्ता-लाभ-विचाराणां पदार्थतावच्छेदकत्वेन तद्भेदमादायैव द्वन्द्वोपपत्तिरिति भावः ।

( ग ) हरिणः पाण्डरः पाण्डुरिति कोषात् हरिणपदस्य पाण्डर-वाचकत्वं ।

( घ ) एक-शेषानङ्गीकारे इत्यर्थः ।

( ङ ) द्वित्वादि-संख्यावच्छिन्न-विष्णुलक्षकस्येत्यर्थः ।

( च ) ज्ञातमित्यर्थः ।

( छ ) त्रित्वावच्छिन्न-सिंहस्येत्यर्थः ।

( ज ) लाघवादाह, "शक्तिभ्रान्त्ये"ति, शक्तिभ्रमेणेत्यर्थः । अस्य च बोधकमिति पूर्व्वेणान्वयः ।

द्वित्व-त्रित्वान्तर्भावेन द्वन्द्वस्यैवासाधुत्वादुक्त-क्रमेणैकशेषो न युक्तः, शलाकापरि हस्त्यश्वमित्यादौ (क) व्यभिचारेणोक्त-नियमस्यासत्त्वात्। एकत्वे (ख) चैकत्वानि चेति विग्रहे चैकत्वानीत्येक-शेषस्य गुण-किरणावल्यामाचार्य्यैरभिहितत्वाच्च। हंसश्च हंसी च इत्यर्थे हंस-हंस्यावित्यप्रयोगात् तत्रापि "पुंसा स्त्रियाः सारूप्ये" इत्यनुशिष्टेः हंसी-पदस्य लोपे हंसावित्यत्र लुप्तमेव हंसीपदमनुसन्धाय स्त्री-पुंसयो-र्हंसयोर्बोधः, तल्लोपमजानतस्तु हंसपदे स्त्री-हंसत्व-पुरुष हंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः (ग) शक्तेर्लक्षणाया (घ) वा ग्रहादेव।

यत्तु (ङ) तत्र हंसपदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकं सुबर्थस्तु पुंस्त्वं हंस एवान्वेति न तु हंस्यामयोग्यत्वात् इति मतं (च), तन्न तथा सति स्त्री-हंसत्व हंसत्वयोः पदार्थतावच्छेदकयो-र्मिथोभेद-विरहेण (छ) द्वन्द्वाप्रसक्तावेक-शेषस्य दुष्करत्वापत्तेः, (ज) अन्यथा घट-तद्-घटावित्यपि द्वन्द्व-प्रसङ्गात्।

हंस्यौ च हंसाश्चेति विग्रहेऽपि हंसा इत्यतो हंसीद्वय-हंस-त्रययोः प्रागुक्तरीत्याऽ-(झ)-वगमः। दुन्दुभौ च दुन्दुभिश्चेति विग्रहे

---

(क) अक्षशलाकयोरेकत्वे वर्त्तमानयोरेव परिणा सहाव्ययीभावस्य विवक्षणादेकत्व-संख्यायाः समास-प्रतिपाद्यत्वेन व्यभिचारादिति भावः।

(ख) एकत्वस्य समास-प्रतिपाद्यत्वमङ्गीकृत्य द्वित्वादेः समासाप्रतिपाद्यत्वोक्तौ दोषमाह "एकत्व" इत्यादि।

(ग) बिभिन्नरूपाभ्यामेकशक्तेः पुष्पवन्तादि-पदेषु प्रसिद्धत्वादिति भावः।

(घ) शक्त्यनङ्गीकारेऽपि तादृशबोधमुपपादयति "लक्षणाया" इति। ग्रहादेवे"त्यस्य स्त्रीपुंसयोर्हंसयोर्बोध इति पूर्व्वेण सम्बन्धः।

(ङ) प्राच्नीनमतं दूषयितुमुपन्यस्यति "यत्त्वि"त्यादिना।

(च) तथा च हंसश्च हंसश्चेतिविग्रह इति भावः।

(छ) स्त्रीत्वविशिष्ट-हंसत्व-शुद्ध-हंसत्वयोरनतिरेकादिति भावः।

(ज) परस्परभेदस्यानियामकत्वे इत्यर्थः।

(झ) तत्तत्संख्यावच्छिन्नबोधक-हंसीपदोत्तरत्वेन ज्ञातं हंसपदं तथाविधार्थस्य लक्षणया बोधकमितिरीत्येत्यर्थः।

दुन्दुभो सुन्दरावित्यत्राप-भेर्य्योर्बोधनस्थले ( क ) पुंलिङ्गस्यैव दुन्दुभि-पदस्य शिष्टतया ( ख ) तद्विशेषणत्वादेव सुन्दरादेः पुंस्त्वं। युवा च युवतिश्च इत्यर्थे युवानावित्यत्राप्युक्तरीत्यैव युवती-यौवनवतोर्बोधः। वरटा-हंसौ लक्ष्मणा-सारसावित्यादौ तु ( ग ) स्त्री-पुंसयोर्द्वन्द्वेऽपि पदसारूप्य-विरहान्नैकशेषः। दम्पत्यर्च्चन-प्रकरणे ब्राह्मणावानयेदित्यत्रापि ब्राह्मणश्च ब्राह्मणी च इति विग्रहे प्रागुक्तदिशा ब्राह्मण-भार्य्या-पत्योरवगमः। एकश्चैका चेत्यत्र एकौ, द्वौ च द्वे चेत्यत्र द्वौ, उभौ चोभे चेत्यत्र उभौ, त्रयश्च तिस्रश्च इत्यत्र च विग्रहे त्रय इत्यादिरेकशेष इष्यत एव।

ग्राम्यानेक-शफेष्वतरूणेषु स्त्री-पुंसयोर्बहुत्वमन्तर्भाव्य सारूप्येण द्वन्द्वस्थले तु पुंस एव लुक्। तेन मेषश्च मेषाश्चेत्यर्थे—मेष इत्यत्रापि लुप्तं बहुमेषाणां लक्षकं मेषपदं प्रतिसन्दधत एव बहु-मेषाणामनेक-मेषीणाञ्चावगमः। एवं महिषश्च महिषाश्चेत्यर्थे महिष इत्यत्रापि महिष-पदं बह्वनां महीषाणां ( घ )। मृगाश्च ( ङ ) मृग्यश्चेत्यर्थे मृगा इत्यत्र तु मृगादेरग्राम्यत्वान्न पुंसो लुक् परन्तु स्त्रियाः। तथा ( च ) गर्द्दभाश्च गर्द्दभ्यश्चेत्यर्थे गर्द्दभा इत्यत्रापि, खरानामेक-शफत्वात्। वर्करोश्च ( छ ) वर्कर्य्यश्च इत्यर्थे वर्करा इत्यत्रापि तरूणार्थकत्वात्।

---

( क ) स्याद्भेर्य्यां दून्दुभिः पुंसि स्यादक्षे दून्दुभिः स्त्रियामित्यमरोक्त्या दून्दुभिशब्दस्योभय वाचकत्वादिति भावः।

( ख ) स्त्रीपुंसयोः पुमान् शेष इत्यनुशासनादिति भावः।

( ग ) "वरटा" हंसपत्नी। "लक्ष्मणा" सारसपत्नीत्यर्थः।

( घ ) लक्षकं प्रतिसन्दधत एवानेक महिष-महिषीणामवगम इति पूर्व्वेणान्वयः।

( ङ ) ग्राम्यपद-प्रयोजनमाह "मृगाश्च" इत्यादिना।

( च ) अनेकशफेत्यस्य प्रयोजनमाह "तथे"त्यादिना "तथा" न पुंसो लुक् परन्तु स्त्रिया इत्यर्थः।

( छ ) अतरुणेत्यस्य प्रयोजनमाह "वर्करास्चे"त्यादिना। वर्करस्तरुणः पशुरित्यमरः। इत्यत्रापी" न पुंसलुक् परन्तु स्त्रिया इति पूर्व्वेण सम्बन्धः।

स्वसा च भ्राता चेत्यर्थे भ्रातरावित्यत्र पुत्रश्च दुहिता चेत्यर्थे पुत्रावित्यत्र च विरूपैक-शेषेऽपि स्वसृपदं दुहितृ-पदञ्च लुप्तम् प्रतिसन्धायेव भ्रातृभगिन्योः पुत्रकन्ययोश्चावगमः। "ज्येष्ठपुत्र-दुहित्रोश्च ज्यैष्ठे मासि न कारयेदि"त्यादिकस्तु प्रयोगः परिचेन्तनीयः (क)।

स च मैत्रश्चेति विग्रहे त्यदादिना तदन्यस्य द्वन्द्वे लुकि ताविय्त्रापि लुप्तं मैत्रादि-पदमनुसन्दधत एव मैत्राद्यवगमः। स च त्वञ्चेत्यादि-विग्रहे किं-पदान्य-त्यदादि-द्वयगर्भ-द्वन्द्वे तु पूर्व्वस्यैव (ख) स्वानुत्तरस्यैव (ग) वा त्यदादेर्लुकि युवामित्यादावप्युक्त-क्रमेणैव तदर्थ-युष्मदर्थयोर्बोधः। स च (घ) सचेत्यत्रापि विभिन्नार्थयोर्विग्रहे स्वपूर्व्वागणितोऽपि तदादिः स्वोत्तरापठित एव (ङ)। "तत्तन्मानुषपुत्योऽसौ यद्‌यद्विद्यातिनिर्मले"त्यादौ तु न तदादि-गणे द्वन्द्वः, परन्तु तदाद्यव्ययेन, यथा "तत्तत्तामसभूतभीतय इत्यादौ, यत्तदादि-व्यतिरिक्तानामिवाव्ययानां सरूपैक-शेषस्य व्युत्पन्नत्वात्, प्रयोगानुरोधित्वात् कल्पनायाः। कश्च (च) त्वञ्चेत्यादि-विग्रहेण किमा (छ) तादृश-द्वन्द्वे तु तदन्यस्यैव (ज) त्यदादेर्लुकि कावित्यादिक एव प्रयोगः। चैत्रस्य पितरावित्यत्रापि विरूपैक-शेषे लुप्तस्य मातृ-

(क) पुत्रत्व-दुहितृत्वाभ्यामेकशक्तिमत्-प्रकृत्यन्तर-स्वीकारेण कथञ्चिदुपपादनीय इति चिन्तावीजं ग्रन्थकृदभिप्रेतमिति भावः।

(ख) त्यदादिगणपठने यः पूर्व्वस्तस्यैव लुकीत्यन्वयः।

(ग) स्वं परपदं। तथा च त्यदादि-गण-पाठे स्वोत्तरापठितस्येत्यर्थः।

(घ) स्वानुत्तरस्येवेति-द्वितीयकल्पानुसरणवीजमाह "सचे"त्यादिना।

(ङ) अतस्तस्य लुगिति शेषः।

(च) किम्पदान्यत्व-निवेश-प्रयोजनमाह "कश्चे"त्यादिना।

(छ) किं शब्देनेत्यर्थः।

(ज) किम्पदान्यस्यैवेत्यर्थः।

पदस्य स्मरणात् मातुरवगमः, तदस्मरतस्तु पितृपदे जनक-शरीरत्वेन लक्षणया (क) माता-पित्रोरवगतिरिति प्राच्चः ।

कौमारास्तु (ख) माता पितुर्द्वन्द्वे माता-पितृभ्यां मातर-पितराभ्यामिति प्रयोग-द्वयो-दर्शनाच्चैतस्य पितराविस्यत्र नैकशेषः, परन्तु पुष्पदन्तादि-पदवत् मातृत्व-पितृत्वाभ्यां विभिन्नरूपाभ्यामेक-शक्तिमदेव नियत-द्विवचनसाकाङ्क्षं पितृपदं प्रकृत्यन्तरं। एवं श्वश्रूश्च श्वशुरश्चेत्यर्थे श्वशुरौ इत्यत्र श्वशुरपदमपि (ग), श्वश्रा श्वशुरस्य द्वन्द्वे श्वश्रू-श्वशुरावित्येव प्रयोगादिति प्राहुः । ४८ ॥

द्वन्द्वं विभजते ।—

द्वौ भेदावस्य शास्त्रोक्तौ
समाहारेतरेतरौ ।
एकान्य-वचनाकाङ्क्षा-
हानोपादानतश्च तौ ॥ ४६ ॥

अस्य द्वन्द्वस्य द्वौ भेदौ, समाहार इतरेतरश्च शास्त्रसिद्धौ, तत्रैकवचनान्य-सुबाकाङ्क्षा-विहीनः समाहारः, तथाविध- [illegible] -श्चेतरेतरः । पाणिपादं हस्त्यश्वमित्यादितो हि करचरणादीनां व[illegible]नामप्यवगतावेक-वचनमेव प्रमाणं, धव-खदिरावित्यादौ तु द्विवचनादिः । "पदि-स्कन्दि-छिदेर्दो"दित्यादितोऽपि पदिस्कन्दिभ्यां सहितः छिदिरिति विगृह्य मध्यपदलोपी कर्म्मधारयो (घ) यथा "अव्याप्त्यतिव्याप्ते"रिति मणिग्रन्थादौ ॥ ४६ ॥

---

(क) अजहत्-स्वार्थ-लक्षणतेत्यर्थः ।

(ख) कापालिकमतमाह "कामारास्त्वित्यादि-ना ।

(ग) प्रकृत्यन्तरमिति पूर्व्वेणान्वयः ।

(घ) अतस्तस्य एकवचनान्य-सुबाकाङ्क्षाविहीनत्वेऽपि नैकवचनमात्रसाकाङ्क्षत्वप्रयुक्तक्लीवलिङ्गत्वापत्तिरूपा क्षतिरिति भावः ।

उपपद समासं लक्षयति—

यदुत्तर-पदं नामा-
मुत्तरं मुदबोधकं ।
धातु-कृदजमुपपद-
समासः स तदन्तकः ॥ ५० ॥

धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं शब्दान्तरा-त्तरं सत् यादृशा-र्थस्य बोधं प्रत्यसमर्थं तादृशार्थकान्यपदकः समास उपपद-संज्ञकः। कुम्भकारः चौरपायीत्यादिके ह्युपपद-समासे धातुकृद्भ्यां निष्पन्नं कर्त्राद्यर्थकं कारादिपदं पदान्तरानुत्तरं सन्न कर्त्रादेरन्वय-बोधक्षमं। चन्द्रनिभमित्यादौ (क) तु तत्पुरुषे निभादिपदं सदृशाद्यर्थे तादृश-मपि न धातुकृद्भ्यां [illegible]ति तद्व्युदासः ॥ ५० ॥

विभजते च—

कारकैकोपपदकः
षड्‌विधोऽयमितिभ्रमः।
कर्म्मकर्त्राद्युपपद-
भेदाद् बहुविधस्त्वसौ ॥ ५१ ॥

कारकेषु उत्तानशयः पूर्व्व-सर इत्यादावुत्तानादिः कर्त्ता (ख)। कुम्भकारः सौवीरपायीत्यादौ कर्म्म (ग)। कच्छपः, पार्श्वशय इत्यादौ करणम् (घ)। उखास्रत् वाहभ्रट् इत्यादावपादानं (ङ)। खशयः

(ख) [illegible]चापि अव्याप्त्या सहितातिव्याप्तिरिति विग्रहः।

(क) धातुकृद्भ्यां निष्पन्नमित्यस्य प्रयोजनमाह "चन्द्रनिभ इत्यादा"विति।

(ख) उत्तानः शेते, पूर्व्वः पिता सरतीति विग्रहः।

(ग) कुम्भं करोति, सौवीरं (काञ्जिकं) पातुं शीलमस्येति विग्रहः।

(घ) कच्छाभ्यांपिबति, पार्श्वाभ्यां शेते इति विग्रहः।

(ङ) उखायाः स्रंसते, वाहात् भ्रश्यते इति विग्रहः।

कुरुचरः इत्यादावधिकरणम् उपपदं (क)। सम्प्रदानन्तु न कुत्रापि दृश्यते, दृश्यते च (ख) ब्रह्मभूय-(ग) मित्यादौ कारक-भिन्नेनाप्युप-पदेन समास इत्यसावनेकविध एव, न तु कारक-मात्रोपपदकत्वात् षड्विध एव, न्यूनत्वाधिकत्वाभ्यां विभागव्याघातादिति (घ)। सूर्य्यम्पश्येत्यप्युक्त-समासः, परन्त्वव्यय-पदस्येव नञा समस्तस्यैव तस्य स्वार्थ-बोधने व्युत्पन्नत्वान्न केवलस्य तस्य (ङ) प्रयोगः ॥ ५१ ॥

इति श्रीजगदीशतर्कालङ्कारकृतायां शब्द-शक्ति-प्रकाशिकायां समास-प्रकरणं समाप्तम्।

---

(क) खे शेते कुरुषु चरतीति विग्रहः।

(ख) "न कुत्रापि दृश्यते" इत्यनेन न्यूनत्वं प्रदर्श्य अधिकत्वं दर्शयति "दृश्यते चे"-त्यादिना।

(ग) ब्रह्मणो भूयते ब्रह्मसम्बन्धिनी सत्तेत्यर्थः।

(घ) सम्प्रदानोपपदस्याभावात् कारकान्योपपदस्य भावाच्चेति भावः।

(ङ) नञ्-रहितस्य सूर्य्यमपश्येत्यस्येत्यर्थः।